# दयासिन्धुः यतिराजः



संस्कृतभारती-चेन्नै

# दयासिन्धुः यतिराजः

## (आळ्वार्-योगिनाम् आचार्याणां च जीवनचरितम्)

वङ्गमूलम् - स्वामी रामकृष्णानन्दः
(आङ्ग्लानुवादः - स्वामी बुधानन्दः)
रूपान्तरं - विद्या रमेशः

संस्कृतभारती
चेन्नै

- प्रकाशिका - संस्कृतभारती
  "सेवा" ७९/५६ तृतीयं तलम्, अलगप्पा मार्गः,
  पुरसैवाक्कम्, चेन्नै ६०० ०८४, तमिल्नाडु
  दूरभाषा ०४४-२६४३२६३५ / ३७
  जङ्गमभाषा -९४४२५४२००७
  e-mail - sbuttaratamilnadu@gmail.com
- मुद्रणम् - माधवमुद्रा, पुरसैवाक्कम्, चेन्नै-८४
- प्रथमं मुद्रणम् - २०१८ (१००० प्रतिकृतयः)
- मूल्यम् - ₹. ६०/-


**Dayāsindhu: Yatirāja:** - an adaptation of **'Life of Sri Ramanuja'** originally written in Bengali by Swami Ramakrishnananda and translated into English by Swami Budhananda, published (in July 2017) by Sri Ramakrishna Math, Chennai-4.


| | | |
|---|---|---|
| Translated and compiled by | : | Vidhya Ramesh |
| Publisher | : | Samskrita Bharati,<br>"Seva", 3rd Floor, Old No 79 / New No 56,<br>Dr.Alagappa Road, Purasaiwakkam,<br>Chennai, 600084.<br>Phone : 044 - 26432635 / 37<br>Mobile : 91 - 9442542007 / 9443722009. |
| e-Mail | : | sbuttaratamilnadu@gmail.com |
| Printed at | : | Madhava Mudhra<br>Purasaiwakkam,<br>Chennai-84 |
| Published on the occasion of | : | Gita Shibiram, December 2018. |
| Number of copies | : | 1000 |
| Price | : | ₹. 60/- |

## प्राक्कथनम्



'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत
।अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥'
इति भगवान् भगवद्गीतायाम् उवाच । धर्मक्षये जाते सति भगवान् स्वयम् आविर्भवति अपि च महात्मनः अवतारयति लोकसङ्ग्रहाय इति सनातनधर्मस्य दृढविश्वासः । तथा हि आळवार्-योगिनः आचार्याश्च अजायन्त इति श्रीवैष्णवसिद्धान्तः । श्रुतिवाक्यानाम् आधारेण एव वैष्णवसिद्धान्तानां प्रतिपादनं सुदृढम् अकरोत् श्रीरामानुजः इति हेतोः सः आचार्येषु अग्रगण्यो भाव्यते ।

तस्य मतद्वयं सनातनधर्मचरिते नवयुगम् अकल्पयत् । प्रथमं तु भगवतः पादकमलेषु पूर्णमनसा शरणागतिः मोक्षसाम्राज्यहेतुकी । इयं भगवद्भक्तिः । द्वितीयञ्च तथा प्रपत्तिं कृत्वा भगवत्कैङ्कर्येण साकं भागवतकैङ्कर्यमपि, तन्नाम मानवसेवा एव भगवद्भक्तेः चरमसीमा । इत्थम् आध्यात्मिकतां सेवां च संयोज्य हिन्दुसमाजाय वरप्रसादं प्राददात् श्रीरामानुजः ।

भगवद्रमानुजस्य पन्थाः समन्वयः। विशिष्टाद्वैतसिद्धान्तप्रतिष्ठायै वेदानां भेदाभेदसूक्तीः घटकसूक्तिभिः संयोजयामास श्रीरामानुजः । अपि च समाजस्थाः सर्वेऽपि मुमुक्षवः मोक्षाधिकारिणः स्युः उच्चनीचभेदं विना । तदर्थं भगवत्कैङ्कर्यं भागवतकैङ्कर्यं च आधारः इति क्रमेण जनतासमन्वयम् असंशत् सः । अपि च आळवार्-योगिनां भक्तिसुधावृष्टेः प्रतीकानां तमिळ्-दिव्यप्रबन्ध-स्तोत्राणां वेदतुल्यतां निधाय वैष्णवमन्दिरपूजाविधिषु वेददिव्यप्रबन्धयोः समन्वयम् आसाधयामास । तस्य सिद्धान्तेन समग्रे देशे भक्तिमार्गः प्रान्तीयभाषाश्च उन्नतिमाप्नुवन् । तादृशस्य महाचार्यस्य जन्मसहस्राब्दसन्दर्भेऽस्मिन् आळवार्-योगिनाम् आचार्याणां च चरितं सङ्क्षेपेण कृत्स्नहृदयेन वर्णयत् इदं पुस्तकं स्वागतार्हम्। लेखिका अभिनन्दनार्हा च।

नी.गोपालस्वामी
भूतपूर्वः मुख्यनिर्वाचनायुक्तः

# प्रकाशकवचनम्

'क्षणार्धोऽपि सत्सङ्गः' इति वेदान्तिनो वदन्ति । अध्येतॄणां पिपठिषूणाञ्च सत्सङ्गः तु साहित्यान्येव । भाषाकौशलवर्धनाय यतमानान् संस्कृताभिमानिनः आकर्ष्टुं सरलसंस्कृतेन साहित्यरचनं संस्कृतभारत्याः कार्येषु अन्यतमम् ।

तद्दृष्ट्या चेन्नै-संस्कृतभारत्या भाषाभ्यासपुस्तकानि, कथासाहित्यानि, पूर्वजानां वरिष्ठानां देशभक्तानाञ्च जीवनचरितानि चेति बहुप्रकारकाणि साहित्यानि प्रकाशितानि सन्ति । 'स्वामिविवेकानन्दस्य जीवने सरसघटनाः' इति पुस्तकं विवेकानन्दस्वामिनः १५०तमे जन्मसंवत्सरे प्रकाशितमासीत् । अधुना आचार्यवर्यस्य श्रीरामानुजस्य जन्मसहस्राब्दे तस्य च ईश्वरांशेन अवतीर्णानाम् आळ्वार्-योगिनां संक्षिप्तचरितं प्रकाश्यते ।

मार्गशीर्षमासे गीताशिबिरे श्रीरामानुजाचार्यजन्मस्थले इदं पुस्तकं **'दयासिन्धुः यतिराजः'** लोकाय अर्प्यते इत्यस्माकं महत् सौभाग्यम् ।

पुस्तकस्य अस्य अनुवादाय अनुग्रहपूर्वम् अनुमतिं प्रदत्तवद्भ्यः चेन्नै-श्रीरामकृष्णमठाध्यक्षेभ्यः साञ्जलि नमस्काराः समर्प्यन्ते । अपि च मुखपुटस्थचित्रम् इतरचित्राणां च स्वीकरणाय अनुमतिं दत्त्वा भूयसा उपकृतवद्भ्यः तेभ्यः कृतज्ञताः निवेद्यन्ते ।

दशाध्यायात्मके पुस्तकेऽस्मिन् द्वितीयाध्यायतः नवमाध्यायपर्यन्तं विद्यमानः विषयः मूलपुस्तकस्य संक्षिप्तरूपान्तर म् । इतरे केचन विषयाः श्रीश्रीनिवासपाट्टराचार्यैः विरचितः 'श्रीरामानुजमतसङ्ग्रहः', संस्कृत-संशोधन-संसद्द्वारा-प्रकाशितं 'सुदर्शनसूरि-विरचित-श्रुतप्रकाशिका-भाष्यसमेतं गद्यत्रयं', श्रीमता रा.पद्मनाभेन आङ्ग्लभाषया विरचितं 'भगवान् रामानुजः' इति एतेभ्यः त्रिभ्यः ग्रन्थेभ्यः सङ्कलिताः । तेभ्यः ग्रन्थकारेभ्यः विद्वद्भ्यः च कृतज्ञताः विज्ञाप्यन्ते । अस्य पुस्तकस्य भाषादृष्ट्या संशोधनं विहितवान् श्रीमान् ज. राधाकृष्णमहाभागः कृतज्ञतापूर्वकं स्मर्यते । मुद्रकाय अन्येभ्यः सहकारिबन्धुभ्यः चापि हार्दाः कृतज्ञताः समर्प्यन्ते ।

# विषयानुक्रमणिका

# दयासिन्धुः यतिराजः

## १. श्रीरामानुजाचार्यकालात् प्राग् भारते दर्शनपरम्परा

### १.१. मतानां समुद्भवः

**"आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रत्यभिसंविशन्ति ।"**

**तैत्तिरीयोपनिषत् / भृगुवल्ली / ६.१**

आनन्दः ब्रह्म । समग्रा इयं सृष्टिः अस्माद् आनन्दाद् जायते, अनेन धीयते, अस्मिन्नेव प्रलीयते इति सुधामयी श्रुतिवाक् ।

आनन्दमयं ब्रह्म एव सारभूतं परमं तत्त्वम् इति वेदे श्रद्दधानाः बुद्धिपूर्वकम् अङ्गीकुर्युः । परं तद्भिन्नं भवति अनुभवजन्यं वेदनम् । मनः संशयात्मकम् इति हेतोः सारासारविषये बहुधा तर्कयन्तः मानवाः दौःस्थ्यम् आप्नुवन्ति । मननशीलानाम् एव इयं स्थितिः चेत् किमु सामान्यानाम्?

'अपि सन्तुष्टो भवान् स्वीयेन जीवनेन ?' इति यदि कञ्चित् पृच्छेम तर्हि आम् इति उत्तरं नैव लभ्येत । सर्वस्यापि जनस्य काचित् आक्षेपभूमिः स्यादेव । स च जनः वर्तमानया स्थित्या अतुष्टः सन् सन्तृप्तिं काङ्क्षन् स्वकीयभौतिकोत्कर्षाय बहुधा यतमानः दृश्यते । जीवनस्य सुखदुःखमिश्रितत्वात् निर्व्याजः सहजः आनन्दः सामान्यमानवानां तु दुर्लभः।

एवं सति 'भवात्ययात् विमुच्य शश्वद् आनन्दं लब्धुं किं करणीयम् ? किं मरणे सर्वमपि पर्यवसितं भवति उत सन्तनोति जीवः मरणानन्तरम् अपि ? कोऽहम् ? किमर्थं सृष्टा वयम्?' इति उदेति प्रश्नसरणिः । ईदृशान् संशयान् परिहर्तुम् एव विविधानि मतानि समुद्भूतानि । विश्वस्य प्रधानमतेषु हिन्दुमताख्यः सनातनधर्मः मुख्यं स्थानं भजति । तत्र कारणद्वयं वर्तते । आद्यं तु अस्य प्राचीनत्वं भवति । द्वितीयं कारणं च अस्य अद्वितीयं दर्शनशास्त्रं यस्य आधुनिकजगति गौरवास्पदं स्थानमस्ति ।

यः तत्त्ववित् कस्यचित् मतस्य विशिष्टान् सैद्धान्तिकविचारान् लोके प्रकाशयति तन्मताचारान् च व्यवहारे स्थापयति स तस्य मतस्य प्रवर्तकत्वेन प्रख्यायते ।

वैदिकधर्मालम्बिनां मतानाम् उन्नतिः अवनतिर्वा कालपरिस्थित्यादिभिः कारणैः समये समये अजायत । **'स कालेनेह महता योगो नष्टः परन्तप'** - ४/२ इदं गीतावाक्यम् – **'एवं सम्प्रदायपरम्परया प्राप्तः योगः तत्तच्छ्रोतृबुद्धिमान्द्याद् विनष्टप्रायः अभूत्'** इति व्याख्याति भाष्यकारः श्रीरामानुजाचार्यः ।

### १.२. बौद्धजैनमतम्

प्रायः क्रि. पू. ५५०काले यदा विश्वस्य विभिन्नदेशेषु तर्कविद्या भूयसा प्रचलने आसीत् तदा भारतवर्षस्य उत्तरभागे बौद्धं जैनं च इति द्वे मते प्रावर्तेताम् । अनयोः प्रतिपादकौ गौतमबुद्धः महावीरः च । उभेऽपि मते भिक्षूणाम् अथवा श्रमणानां सङ्घटनम् आलम्बेते । वेदानां प्रामाण्यं निरस्य सर्वप्राणिषु आदरभावः इति अहिंसाधर्मम् उपदिशतः इमे । उभयोरपि मतयोः आध्यात्मविद्याबोधकाः ग्रन्थाः सिद्धान्ताः आचाराः च वर्तन्ते ।

तृतीयक्रीस्तशतकपर्यन्तं समग्रे भारते बौद्धमतस्य प्रचारः महता वेगेन अभवत् । अत्र हेतुः आसीत् राज्ञोः अशोककनिष्कयोः आश्रयबलम् । एवं बौद्धमतं सुदीर्घकालं यावत् वृद्धिम् आसाद्य कालक्रमेण ह्रासत्वं गतम् । तथापि विश्वस्य बहुषु देशेषु विशिष्य पूर्ववर्तिषु देशेषु मतमिदम् अद्यत्वेऽपि प्रबलतया विलसति ।

### १.३. वैदिकधर्मस्य पुनरुत्थानम्

तृतीयशतकात् परं वैदिकधर्मस्य पुनरुत्थानम् आरब्धम् । गुप्तसाम्राज्यकाले उत्तरभारते वैदिकधर्मः शिखरायते स्म । राजकीयसमर्थनस्य परिणामतः ग्रन्थेषु अभिलेखेषु च संस्कृतभाषायाः प्रयोगः प्रचुरः व्यापकः चाभवत् । वैदिकधर्मावलम्बिमतानां पुनरुत्थाने विवर्धने च प्रशासितृसमर्थनं बलवत् कारणं चेदपि महापुरुषाणां चरितानि बलवत्तरं कारणं भवति ।

**तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको ऋषिर्यस्य मतं प्रमाणम् ।**
**धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः सः पन्थाः॥**

महाभारतं/ वनपर्व/ ३१३/११७

तर्कः जटिलः अप्रतिष्ठितः च । अभेदश्रुतिः ("सर्वं ह्येतद् ब्रह्म अयमात्मा ब्रह्म' - माण्डूक्योपनिषत् - १.२), भेदश्रुतिः ('द्वा सुपर्णा सयुजा सखाया' -

श्वेताश्वतरोपनिषत् - ४.६) इति श्रुतयः विभिन्नाः। 'एकं सद् विप्रा बहुधा वदन्ति' - (ऋग्वेदः -१.१६४.४६) इत्येनं मन्त्रार्थम् अनु नैकाः विचारधाराः प्रवृत्ताः नैकानि मतानि प्रवृत्तानि च। धर्मतत्त्वं नावबुध्यते अत्यन्तं सूक्ष्मत्वात्। तस्मात् कस्य मतस्य अनुसरणं हिताय कल्पेत इति निर्णेतुमशक्तः भवति जनः। यस्य यस्य यादृशी श्रद्धा सः तदनुसारेण किञ्चन मतम् अभ्युपैति। अत एव महात्मनां जीवनदर्शनस्य अनुसरणं सुकरम् इति व्यासमहर्षिप्रणीतस्य महाभारतस्य हितवचनम्। शास्त्रपाणयः तत्त्वनिष्ठाः धर्मज्ञाः सदाचारवन्तः इमे महाजनाः दिग्भ्रान्तान् जनान् सन्मार्गेण गमयन्ति।

मीमांसाचार्येण श्रीकुमरिल्लभट्टेन बौद्धमतं विरुद्ध्य महती काचित् प्रतिक्रिया विहिता। ततः परं ज्ञानात्मा आदिशङ्करभगवत्पादः आभारतं वैदिकधर्मस्य पुनःप्रतिष्ठापने सफलः अभवत्।

### १.४. आदिशङ्कराचार्यः

अद्वैतमते परिनिष्ठितः आदिशङ्करभगवत्पादः तस्य दर्शनस्य अप्रतिमव्याख्यानानि व्यरचयत्। समग्रे भारतवर्षे परिव्रजता तेन नैके मठाः प्रतिष्ठापिताः। अद्यापि तेन संस्थापिताः केचन मठाः विद्यन्ते येषु कर्णाटकस्थः शृङ्गेरीमठः प्रधानत्वेन परिगण्यते। गुरुणा गोविन्दपादेन अनुगृहीतः श्रीशङ्कराचार्यः षोडशे वयसि एव उपनिषदः श्रीमद्भगवद्गीता ब्रह्मसूत्राणि चेत्येषां समाहारभूतस्य प्रमाणशास्त्रस्य प्रस्थानत्रयस्य निर्वचनम् अकरोत्। तदतिरिच्य तेन अनेके प्रकरणग्रन्थाः अपि रचिताः। तेन न केवलम् अद्वैतदर्शनं प्रतिपादितम् अपि तु इहलोके शास्त्रविध्यनुसारि जीवनविधानम् अपि निर्दिष्टम्। तेन ललितपदैः रचितानि मधुरभावसमन्वितानि स्तोत्राणि गृहे गृहे पठ्यन्ते। प्रभाविव्यक्तित्ववान् सः यदद्वैतदर्शनं प्राकाशयत् तस्य दर्शनस्य अनुसर्तॄणां सङ्ख्या अद्यापि वर्धमाना एव दृश्यते।

**श्रुतिस्मृतिपुराणानामालयं करुणालयम्।**
**नमामि भगवत्पादशङ्करं लोकशङ्करम्॥**

### १.५. दक्षिणभारते भक्तिसम्प्रदायाः

मधुर-गेय-भक्तिकाव्यस्य श्रवणं गानं च कस्य हृदयं नार्द्रयति ? आळवार्-नायन्मार्-योगिनां भक्तिकाव्यानि क्रमशः वैष्णवमतस्य शैवमतस्य च प्रेरणास्रोतांसि आसन्।

जनप्रियं हृदयावर्जकं तत् भक्तिकाव्यम् तमिल्साहित्यस्य संवर्धने प्रधानः हेतुः आसीत् इति बुधानां मतम्।

दक्षिणभारते सप्तमे शतके काञ्चीम् अधिष्ठाय शासनं कुर्वतः पल्लवसाम्राज्यस्य काले वस्तुतः भक्तेः पुनरुत्थानं प्रारभत। अस्य प्रसारस्य परिणामतः मामल्लपुर-नामक्कल्-तिरुचिरापल्लि-प्रभृतिस्थलेषु कन्दरस्थाः भव्यदेवालयाः निर्मापिताः। अत्र विद्यमानानां प्रतिमानाम् इतराकृतीनां च शिल्पकर्म चारुतरम्। नैकः देवालयः प्रायः बृहत्याः एकस्याः एव शिलायाः भेदनेन निर्मितः अभवत्। तथैव क्रमशः षोडश-शतकपर्यन्तं चालुक्य-राष्ट्रकूट-पाण्ड्य-चोळ-चेर-काकतीय-होय्साल-विजयनगर-साम्राज्य-कालेषु निर्मितानि भव्यमन्दिराणि अद्यापि विराजन्ते। प्रजाभिः सेव्यमानानि प्रजानां पोषकाणि च एतानि मन्दिराणि भारतस्य महनीयसंस्कृतेः उन्नतेतिहासस्य च प्रतीकरूपाणि। परमशिवस्य १२ ज्योतिर्लिङ्गानि श्रीमन्नारयणस्य १०८ दिव्यदेशाः च इति प्रसिद्ध-पवित्रस्थलेषु अधिकतराणि मन्दिराणि भारतस्य दक्षिणप्रान्तेषु सन्ति। जीवनकाले सकृद्वा एतानि पुण्यस्थलानि प्रति तीर्थयात्रां चिकीर्षन्ति भक्ताः।

**१.६. आळ्वार्-योगिनः**

श्रीमद्भागवतपुराणे द्रविडदेशेषु जनिष्यमाणानां श्रीमन्नारायणस्य अनन्यभक्तानां (आळ्वार्-योगिनां) च तत्रत्यानां पुण्यनदीनां च उल्लेखः विद्यते -

**कलौ खलु भविष्यन्ति नारायणपरायणाः।**
**क्वचित् क्वचिन्महाराज द्रविडेषु च भूरिशः।**
**ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी।**
**कावेरी च महापुण्या प्रतीची च महानदी।**
**ये पिबन्ति जलं तासां मनुजा मनुजेश्वर।**
**प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः॥**(श्रीमद्भागवतम्-११.५.३८-४०)

विष्णुभक्तिरसमत्तभ्रमराः एते आळ्वार्-योगिनः १२ संख्याकाः। एतेषु केचन द्वापरकल्योः सन्धिकाले इतरे च कलेः आरम्भकाले सम्भूताः इति परिगण्यते। एतैः तमिल्भाषया आत्म-परमात्म-तत्त्वबोधकानि भक्तिभावव्यञ्जकानि च ४००० पद्यानि गीतानि। अयं पद्यसमुच्चयः दिव्यप्रबन्धः द्राविडवेदः च इत्यभिधीयते। अत्र प्रतिपादितः भक्तिसम्प्रदायः एव वैष्णवमतस्य उद्दीपने विवर्धने च महत्तमः हेतुः आसीत्।

'आळवार्' इत्यस्य तमिळ्-पदस्य नित्यं भगवद्भक्तिरसे स्वयं अवगाहते अन्यान् च अवगाहयति इत्यर्थः। श्रीमन्नारायणस्य कस्यचित् दिव्यायुधस्य वा दिव्यभूषणस्य वा कस्याश्चित् विभूतेः वा अंशत्वेन अवतीर्णः प्रत्येकम् अपि आळवार् इति विभाव्यते । आद्याळवार्-योगिनः त्रयः आण्डाळ् च एते चत्वारः अयोनिजाः । मधुरकविः विष्णुचित्तः भक्ताङ्घ्रिरेणुः च एते त्रयः एव ब्राह्मणकुलोत्पन्नाः ।

दिव्यदेशाः इत्याख्यपुण्यस्थलेषु प्रायः आदौ भगवान् मृकण्डु-शालिहोत्रप्रभृति-महर्षीणां तपसा प्रसन्नः सन् तेभ्यः प्रत्यक्षदर्शनम् अददात् । ततः लोककल्याण-तत्पराणां तेषाम् ऋषीणां प्रार्थनाम् अङ्गीकृत्य गृहीतार्चारूपः ईश्वरः तस्मिन्नेव स्थले रममाणः लोकान् अनुगृह्णाति । बहूनि आळवार्-पद्यानि दिव्यदेशेषु आराध्यमानस्य श्रीमन्नारायणस्य मङ्गलाशासनरूपा स्तुतिः ।

*********

# २. द्वादश आळ्वार्-योगिनः

**२.१. सरोयोगी / पोय्गै आळ्वार्**

**तुलायां श्रावणे जातं काञ्च्यां काञ्चनवारिजात् ।**
**द्वापरे पाञ्चजन्यांशं सरोयोगिनमाश्रये ॥[1]**

**२.२. भूतयोगी / भूतत्ताळ्वार्**

**तुलाश्रविष्ठासम्भूतं भूतं कल्लोलमालिनः ।**
**तीरे फुल्लोत्पलान्मल्लापुर्यामीडे गदांशकम् ॥**

**२.३. महदाह्वय-योगी / पेय्-आळ्वार्**

**तुलाशतभिषग्जातं मयूरपुरिकैरवात् ।**
**महान्तं महदाख्यातं वन्दे श्रीनन्दकांशकम् ॥**

श्रीमन्नारायणस्य शङ्खांशः सरोयोगी । गदांशः भूतयोगी । खड्गांशः महद्योगी । यस्मिन् सरसि सरोयोगी आविरभूत् तत् काञ्च्यां ***यथोक्तकारि-मन्दिरस्य***[2] समीपे विद्यते । भूतयोगिनः आविर्भावः यत्र अघटत तत् सरः महाबलिपुरे **स्थलशयनभगवतः** आलयस्य समीपे अस्ति । महद्योगी कूपे आविरभूत् । चेन्नैनगरस्थे मयिलापुरे **आदिकेशवदेवालये** अयं कूपः वर्तते ।

त्रयः एते योगिनः कदाचित् दैवात् गोपपुरे कस्यचित् गृहस्य देहल्यां मिलिताः । सङ्कीर्णं तत्स्थलम् एकस्य जनस्य शयनाय द्वयोरुपवेशनाय त्रयाणां च स्थित्यै अलम् । अन्धकारावृतायां तस्यां रात्रौ विमर्दनं किमपि अनुभूय चतुर्थः कोऽत्र इति चिन्तयत्सु तेषु आश्चर्यम् ! पुण्डरीकाक्षः मकरकुण्डलकौस्तुभधरः शङ्खचक्रपाणिः लक्ष्मीनाथः तेषां पुरः आविरभूत् । तेजसामपि तेजसः तद्दिव्यरूपस्य साक्षात्कारं लब्ध्वा आनन्दातिरेकेण तम् अस्तुवन् त्रयस्ते योगिनः । श्रीवेदान्तदेशिककृते 'देहलीशस्तुति'नामके अद्भुतकाव्ये अस्य प्रसङ्गस्य वर्णनम् अस्ति -

**दीपेन केनचिदशीतरुचा निशीथे**
**स्नेहोपपन्न-परिशुद्धगुणार्पितेन**
**दह्यावकाशनिबिडं ददृशुर्भवन्तं**

---

[1] आळ्वार्-नमस्क्रियापराः १२ श्लोकाः एते ब्रह्मतन्त्रस्वतन्त्रस्वामिना विरचितात् दिव्यसूरिस्तोत्रात् उद्धृताः।

[2] अस्य आलयस्य वैशिष्ट्यं भक्तिसारयोगिचरिते वर्णितमस्ति ।

**स्वाध्याययोगनयनाः शुचयः कवीन्द्राः ॥६॥**

भगवन् ! वेदयोगौ एव नेत्रे येषां ते विमलाः कविवराः अपर्याप्तस्थलावकाशां (गृहभागभूतां तां देहलीं, विमर्दनेन इतोऽपि) निबिडीकुर्वन्तं त्वां दृष्टवन्तः । ज्योत्स्नया न अपि तु केनचित् प्रकाशान्तरेण जातः तव दर्शनलाभः । विशिष्टं तत् ज्योतिः कीदृशम् ? भक्तिघृतपूर्णदीपे आरोपित-सत्त्व-वर्तिकाग्रे स्थितं तज्ज्योतिः ।

अस्मिन्नेव काव्ये वर्धमानस्य श्रीत्रिविक्रमदेवस्य सौन्दर्यातिशयं चित्रीकरोति वेदान्ताचार्यः -

**भक्तप्रिय त्वयि तथा वर्धमाने**
**मुक्तावितानततिस्तव पूर्वमासीत् ।**
**हारावलिः परमथो रशनाकलापः**
**तारागणस्तदनु मौक्तिकनूपुरश्रीः ॥१०॥**

हे भक्तवत्सल ! (त्रिषु पदेषु भुवनानि मातुं) तथा वर्धमानस्य तव विविधाभरणविशेषाः सञ्जाताः आकाशस्थाः नक्षत्रगणाः । आदौ किरीटदशां, ततः कण्ठहारावलिदशां, ततः रशनादशां ततः च नूपुरदशां च ते प्राप्नुवन् । **तिरुक्कविलूर्** इति अद्यत्वे प्रसिद्धे अस्मिन् गोपपुर-दिव्यदेशे भगवान् श्रीत्रिविक्रमः *अर्चारूपेण*[1] विराजते ।

**२.४. भक्तिसारमुनिः / तिरुमळिसै आळ्वार्**

**मघायां मकरे मासे चक्रांशं भार्गवोद्भवम् ।**
**महीसारपुराधीशं भक्तिसारमहं भजे ॥**

चेन्नै-श्रीपेरुम्बुदूर्-मार्गस्थं 'तिरुमळिसै' (महीसारपुरम्) अस्य जन्मस्थलम् । भगवतः सुदर्शनचक्रस्य अंशभूतः भार्गवऋषेः पुत्रः अयं भक्तिसारयोगी ।

अयम् आळ्वार् कदाचित् वेगवतीतटे स्थितायां काञ्च्यां विराजमानम् आदिशेषपर्यङ्कशायिमन्दिरं प्राप्तः । सः सरोयोगिनं भगवन्तं च ध्यायन् अनेकशतवर्षाणि यावत् तत्रैव न्यवसत् । कणिकण्णन्-नामकः शिष्यः तम् असेवत ।

---

[1] विशिष्टाद्वैतसिद्धान्तानुसारं विभोः परमात्मनः पञ्च दशाः (रूपाणि) उच्यन्ते । परः (वैकुण्ठनाथः), व्यूहः (क्षीराब्धिशायी), विभवः (मत्स्यकूर्माद्यवताराः), अन्तर्यामी (सर्वभूतहृदि सन्निविष्टः), अर्चारूपः (देवालयेषु विग्रहरूपः अथवा शालग्रामरूपः) च इति ।

काचित् वृद्धा नित्यम् आलयसम्मार्जनादिकं करोति स्म श्रद्धया । तस्याः सेवया प्रसन्नः आळवार् तां वरं याचितुमवदत् । तस्याः इच्छानुगुणं तां रूपवतीं तरुणीं चाकरोत् । तस्यां युवत्याम् अनुरक्तः पल्लवराजः तां परिणीतवान् ।

एकदा राजा कौतुकात् राज्ञीम् अपृच्छत् - 'मम यौवनं नष्टप्रायं किन्तु कथन्त्वम् अधुनापि युवतिरसि ?' इति । तद्रहस्यं विज्ञाय स्वयमपि युवा बुभूषुः राजा कणिकण्णशिष्यम् आहूय तद्गुरोः साहाय्यं प्रार्थितवान् । शिष्यः राजप्रार्थनां निराकरोत् । रुष्टः राजा तं स्वराजधान्याः काञ्च्याः निर्वासितवान् ।

भक्तिसारः भगवन्तम् अवदत् - 'मच्छिष्याय यत्र स्थलं नास्ति तत्र न वसेयम् । तमनुगतोऽस्मि । त्वमपि स्वशय्यां (आदिशेषशय्यां) पुटीकुरु' इति । भगवान् भक्तवचनम् अनुपालयन् प्रस्थितः । तद्दृष्ट्वा देवाः अपि काञ्चीतः प्रस्थिताः । तेषां निर्गमनेन तमसावृतं तन्नगरम् अभद्रं निष्प्राणमिव सञ्जातम् । अन्येद्युः प्रातः सन्त्रस्तः राजा सत्वरं शिष्यं प्रत्यागन्तुम् अयाचत । आळवार् अपि भगवन्तं प्रार्थयत 'स्वशय्यां प्रसार्य यथास्थानं शेताम्' इति ।

भक्तपराधीनः ननु भगवान् । भक्तेन यथा उक्तं तथा अकरोत् सः इत्यतः तद् **यथोक्तकारिमन्दिरम्** इति नाम्ना प्रसिद्धम् जातम् ।

## शठारिः / नम्माळवार् मधुरकविश्च (गुरुशिष्यौ)

### २.५. शठारिः / नम्माळवार्

**वैशाखे तु विशाखायां कुरुकापुरिकारिजम् ।**
**पाण्ड्यदेशे कलेरादौ शठारिं सैन्यपं भजे ॥**

### २.६. मधुरकविः / मधुरकवि-आळवार्

**चैत्रे चित्रासमुद्भूतं पाण्ड्यदेशे गणांशकम् ।**
**श्रीपरांकुशसद्भक्तं मधुरं कविमाश्रये ॥**

आळवार्-योगिनां मूर्धन्यः नम्माळवार् शठारिः, शठकोपः, पराङ्कुशः, प्रपन्नजनकूटस्थः च इति नामभिः पूज्यते । वैष्णवीसेनायाः सेनाधिपतेः श्रीविष्वक्सेनस्य अवतारः अयम् ।

कृषिककुले लब्धजन्मनः अस्य पितरौ 'उडयनङ्गै-कारि'नामानौ अनन्यभक्तौ श्रीविष्णोः । अयं शिशुः न क्षीरं पिबति, न रोदिति न वा स्वपिति इति दृष्ट्वा चिन्ताग्रस्तौ तौ 'मारन्' (सामान्येतरः) इति नाम्ना अभिधाय

**आदिनाथदेवालय**समीपे भगवतः शरणे तम् अत्यजताम् । स शिशुः देवालयस्थं कञ्चन वृक्षम् आरूढः । तिन्त्रिणीतरुः सः शठारेः अवतारस्थलत्वेन आदिशेषावताररूपेण च पूज्यते । तमिल्नाडुप्रान्तस्य दक्षिणोपान्तभागे ताम्रपर्णीनद्याः तीरे स्थितं **कुरुकापुरी**नामकं पुण्यस्थलमिदम् अद्यत्वे **आऴ्वार्-तिरुनगरी** इति नाम्ना विख्यातम्।

शठारिः १६ वर्षाणि यावत् अशनानिद्राविहीनः तत्रैव आस्ते स्म । यदा मधुरकविः तम् उपसृत्य काञ्चित् आध्यात्मविचिकित्सां व्यज्ञापयत् तदा सः इदम्प्रथमतया प्राभाषत । भगवच्चरणयोः विगाहनमेव शठारेः भोज्यं पेयं भोग्यं चेति सर्वमपि । चित्तचोरस्य श्रीकृष्णस्य एव चित्तापहारकः सः । शठारिसूक्तिः (सहस्रगीतिः /तिरुवाय्-मोऴि) सामवेदसमा मान्यते ।

*'कुमुद' गणाधिपांशः*[1] मधुरकविः तं गुरुं शठारिम् एव सर्वस्वं मत्वा तदीयसेवायां च तदुपदेशश्रवणे च व्यापृतः भवति स्म । शठारेः (ऋते) अविदितविषयान्तरः उपनिषदाम् उपगानमात्रभोगः इत्यादिभिः पदैः स्तूयमानः मधुरकवि-आऴ्वार् एकादशभिः पद्यैः गुरुं शठारिम् अस्तौत् ।

## २.७. कुलशेखरराजः / कुलशेखराऴ्वार्

**कुम्भे पुनर्वसौ जातं केरले *चोऴपट्टणे*[2] ।**
**कौस्तुभांशं धराधीशं कुलशेखरमाश्रये ॥**

भगवतः कौस्तुभमणेः अंशरूपेण केरले चेरक्षत्रियकुले जातः राजा कुलशेखरः ।

राज्ञः अस्य भागवतेभ्यः रामायणकथाश्रवणे नितराम् आसक्तिः । युद्धप्रसङ्ग-वर्णनानि श्रुत्वा असकृत् तन्मयीभावं प्राप्तः अयं चिन्ताकुलः सन् - 'हा ! खरदूषण-तुल्यैः मायाविराक्षसैः सह एकाकी कथं युध्येत श्रीरामः । भोः सेनानायकाः! सायुधं ससैन्यं युद्धभूमिं प्रति त्वरणीयम् अस्माभिः । जगच्चक्रवर्तिनः श्रीरामस्य साहाय्याचरणं नन्वस्माकं कर्तव्यम्' इति घोषयति स्म । सुष्ठु राज्यं परिपालयतः अस्य श्रीरङ्ग-यात्रायै उत्कण्ठा दिने दिने वर्धते स्म ।

प्रणवाकारविमानसहितः स्वयंव्यक्तमूर्तिः श्रीरङ्गेशः कृतयुगे सत्यलोके ब्रह्मणा ततः त्रेतायुगे इक्ष्वाकुराजभिः आराध्यते स्म । श्रीरामः स्वाराध्यमूर्तिं तं विभीषणाय

---

[1] मधुरकविः वैनतेयांशः इत्यपि उच्यते ।

[2] चेरराजधानी अनन्तरकाले राजेन्द्रचोऴपट्टणम् इति नाम आप्नोत् ।

प्रायच्छत् । लङ्कां प्रति गच्छन् विभीषणः यदा कावेरीतीरे अवतीर्णः तदा श्रीरङ्गेशः तत् क्षेत्रम् अध्युषितुम् इच्छन् तत्रैव शयितः। तस्मात् तस्य क्षेत्रस्य नाम श्रीरङ्गम् ।

**कावेरी विरजा सेयं वैकुण्ठं रङ्गमन्दिरम् ।**
**स वासुदेवो रङ्गेशः प्रत्यक्षं परमं पदम् ।**
**विमानं प्रणवाकारं वेदशृङ्गं महाद्भुतम् ।**
**श्रीरङ्गशायी भगवान् प्रणवार्थप्रकाशकः ॥**[1]

इयं कावेरी एव सा विरजा नदी । इदं रङ्गमन्दिरम् एव तत् वैकुण्ठम् । अयं प्रत्यक्षः रङ्गेशः एव सः परः वासुदेवः परमप्राप्यः च । प्रणवाकारविमानस्थाः कलशाः एव वेदस्य मौलिमुकुटाः उपनिषदः। अयं आदिशेषशयनः भगवान् एव प्रणवार्थबोधकः।

आदिशङ्करभगवत्पादैः विरचिते रङ्गनाथाष्टकस्तोत्रे श्रीरङ्गेशस्य श्रीरङ्गक्षेत्रस्य च माहात्म्यं रमणीयतया वर्णितम् -

**इदं हि रङ्गं त्यजतामिहाङ्गं**
**पुनर्नचाङ्गं यदि चाङ्गमेति ।**
**पाणौ रथाङ्गं चरणेऽम्बु-गाङ्गं**
**याने विहङ्गं शयने भुजङ्गम् ॥ ८॥**

एतत् श्रीरङ्गक्षेत्रम् । अत्र शरीरत्यागः (मरणं) भवति चेत् पुनः अङ्गं (शरीरप्राप्तिः) न भवति । यदि (सः जीवः) शरीरं प्राप्नोति तर्हि सः विष्णोः सारूप्य-स्थितिं प्राप्नोति । यस्य पाणौ चक्रं राजते, यस्य चरणाभ्यां गङ्गा निःसरति, यस्य वाहनं गरुडः, यस्य शय्या आदिशेषः तस्य विष्णोः सारूप्यपदम् ।

तादृशपुण्यक्षेत्रे श्रीरङ्गे अव्याहत-भगवद्ध्यानं कर्तुं सः कुलशेखराजः पुत्रे राज्यभारं निक्षिप्य प्रयातः । तत्र कञ्चित् कालं श्रीरङ्गेशं भक्त्वा वैकुण्ठधाम आप्नोत् ।

---

[1] कावेरी श्रीरङ्गेशस्य मालाम् इव आकृतिं धारयति । कदाचित् जलौघात् परं श्रीरङ्गेशालयः समग्रतया भूमौ निमग्नः । एकदा तन्नद्यां स्नानं कुर्वता धर्मवर्मवंशस्य केनचित् नृपेण शुकमुखेन अयं श्लोकः श्रुतः। ततः अन्वेषणखननादिकं कृत्वा अयम् आलयः पुनः प्रतिष्ठापितः । शुकस्य उपकारं संस्मर्तुं राज्ञा शुकमण्डपः निर्मापितः । अयं राजा अपि किळिच्चोळन् (किळि = शुकः) इति प्रसिद्धः ।

अनेन तमिळभाषया बहूनि पद्यानि रचितानि। संस्कृतेन मुकुन्दमालास्तोत्रम् अपि अनेन रचितम् इति विश्वस्यते। अस्य स्तोत्रस्य प्रसिद्धं श्लोकद्वयम् -

कृष्ण त्वदीय पदपङ्कजपञ्जरान्तः
अद्यैव विशतु मे मानसराजहंसः।
प्राणप्रयाणसमये कफवातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते॥

मज्जन्मनः फलमिदं मधुकैटभारे
मत्प्रार्थनीय मदनुग्रह एष एव।
त्वद्भृत्यभृत्य-परिचारकभृत्यभृत्य-
भृत्यस्य भृत्य इति मां स्मर लोकनाथ॥

## विष्णुचित्तः गोदा च (पेरियाळ्वार् आण्डाळ् च)

### २.८. विष्णुचित्तः / पेरियाळ्वार्

ज्येष्ठे स्वातीभवं विष्णुरथांशं धन्विनः पुरे।
प्रपद्ये श्वशुरं विष्णोर्विष्णुचित्तं पुरःशिखम्॥

### २.९. गोदा / आण्डाळ्

आषाढे पूर्वफल्गुन्यां तुलसीकाननोद्भवे।
पाण्ड्ये विश्वम्भरां गोदां वन्दे श्रीरङ्गनायिकाम्॥

वेदात्मनः गरुडस्य (विष्णुरथस्य) अंशः श्रीविष्णुचित्तः। भट्टनाथः इति अस्य अपरं नाम। इतरे आळ्वार्-योगिनः प्रायः नायिकाभावेन वा दास्यभावेन वा अगायन्। किन्तु विष्णुचित्तस्य पद्यानि यशोदाभावानुगानि वात्सल्यभक्तिव्यञ्जकानि। अयं धन्विपुरे (श्रीविल्लिप्पुत्तूर्) वटपत्रशायिमन्दिरस्य नन्दवनं परिरक्षन् मालाकैङ्कर्ये रमते स्म।

एकदा सः समीपस्थे मदुरैनगरे पाण्ड्यराजसभायां प्रवृत्ते वादे विजयी अभवत्। वल्लभदेवराजः तं सम्मानयितुम् ऐच्छत्। अतः अलङ्कृतगजे आसीनः विष्णुचित्तः विद्वद्भिः परिवृतः जयघोषैः शंसितः सन् राजवीथ्यां नीतः। तदा आकाशे गरुडवाहनः श्रीहरिः तस्मै दर्शनम् अदात्। भक्तिस्निग्धचितः सः भगवतः दिव्यं रूपं दर्शं दर्शं पुलकाङ्कितः अभूत्।

भगवान् भक्तेषु वत्सलः । अयम् विष्णुचित्तः भगवति वत्सलः । सर्वथा अहङ्कारविहीनः सः 'अद्य मया जयः प्राप्तः, माम् अनुग्रहीतुं स्वयं श्रीहरिः अत्र प्रादुरभूत् ! अहो भाग्यं मम' इति नैव अचिन्तयत् । 'अहो ! कियत् सुन्दरम् अस्य रूपम् ? कस्यापि कुदृष्टिपातः न भवत्वस्मिन्' इति रक्षितृभावनया सः भगवतः मङ्गलाशासनं "पल्लाण्डु पल्लाण्डु..." (चिरञ्जीव चिरञ्जीव..) इति पद्यैः अकरोत् तदा । ततः धन्विपुरं प्रतिगतः सः पूर्ववत् वटपत्रशायिनं प्रीत्या असेवत ।

एकदा सः तुलसीवने कञ्चित् दिव्यरूपं स्त्रीशिशुम् आलोकत । सेयम् अस्य पुत्री गोदा भूदेव्याः अवताररूपा । पितुः सकाशात् कथाः श्रावं श्रावं विवर्धमाना गोदा आ बाल्याद् भगवति अनुरक्ता सती श्रीरङ्गनाथमेव पतिरूपेण वृतवती । पित्रा कृतां भगवदर्थां स्रजम् इयं स्वकण्ठे धारयति स्म । अनया धृतायाः तत्स्रजः प्रतिग्रहणं भगवतः अपि प्रियं भवति स्म ।

अनया रचिता पद्यमाला तमिऴ्-मार्गऴिमासे (धनुर्मासे) प्रतिदिनं जनैः भक्त्या गीयते । द्वापरयुगे गोप्यः कात्यायनीव्रतानुष्ठानद्वारा श्रीकृष्णं प्राप्तवत्यः इति *श्रीमद्भागवतकथा*श्रवणद्वारा[1] विदित्वा तदनुकरणं कुर्वाणा 'पावै'व्रतम् आचरितवती गोदा । अतः सा पद्यमाला 'तिरुप्पावै' इति कथ्यते ।

**हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः ।**
**चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनव्रतम् ॥**
**नन्दगोपसुतं देवि पतिं मे कुरु ते नमः ।**
**इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः ॥** **(श्रीमद्भागवतम् - १०/२२/१,४)**

यदा भगवत्तः वियोगं सोढुम् अशक्ता गोदा तदा श्रीरङ्गेशः स्वप्नमुखेन विष्णुचित्तम् आदिशत् यत् सा वधूरूपेण श्रीरङ्गं प्रति आनेतव्या इति । वधूगोष्ठ्यां श्रीरङ्गमन्दिरं प्राप्तायां श्रीरङ्गसन्निधिं प्रविष्टा गोदा तस्मिन्नेव लीना अभूत् ।
स्वामिवेदान्तदेशिकः गोदावचोमाधुर्यातिशयम् अनेन प्रकारेण वर्णयति -

**वल्मीकतः श्रवणतो वसुधात्मनस्ते**
**जातो बभूव स मुनिः कविसार्वभौमः ।**

---

[1] यथा गोपीनां भक्त्या आण्डाळ् प्रेरिता तथा आण्डाळ्-चरितं श्रुत्वा भक्तवरेण्या मीराबायी प्रेरणां प्राप्नोत् इति कथा विश्रुता ।

**गोदे किमद्भुतमिदं यदमी स्वदन्ते**
**वक्त्रारविन्दमकरन्दनिभाः प्रबन्धाः ॥** श्रीगोदास्तुतिः - ७

हे देवि गोदे ! वसुधात्मा हि त्वम् । वसुधायाः (तव) श्रोत्रभूतात् वल्मीकात् जातः मुनिः'कविचक्रवर्ती' 'आदिकविः' इति लोके वन्द्यते । (वल्मीकः भूमेः श्रोत्रम् उच्यते ।) एवं सति मकरन्दसदृशं तवमुखपद्मनिःसृतं वचः इयत्तया स्वदते इति किं चित्रम् ?

**२.१०. भक्ताङ्घ्रिरेणुः / तोण्डरडिप्पोडि-आळ्वार्**

**कोदण्डे ज्येष्ठनक्षत्रे मण्डङ्गुडिपुरोद्भवम् ।**
**चोलोर्व्यां वनमालांशं भक्ताङ्घ्रिरेणुमाश्रये ॥**

महाविष्णोः वनमालायाः अंशस्य अस्य विप्रनारायणः इत्यपरं नामधेयमस्ति । अधीतवेदवेदाङ्गः अयं मालाः ग्रथित्वा भगवते भक्त्या अर्पयति स्म । अनेन श्रीरङ्गेशस्तुतिपरा प्राबोधिकी सूक्तिमाला अपि उपनिबद्धा । इयं रम्या श्रीरङ्गनाथसुप्रभातस्तुतिः ।

सज्जनः भक्तः अपि कदाचित् प्रारब्धकर्मवशात् अकार्यस्य करणेन स्खलनं प्राप्नोति । किन्तु आश्रितप्रवणः ईश्वरः तम् उद्धरत्येव । **'न मे भक्तः प्रणश्यति'** - ९/३१ इति गीतावचनं ह्यत्र प्रमाणम् । अयम् आळ्वार् आजन्मशुद्धः तथापि तं निमित्तीकृत्य मर्त्यानां शिक्षणाय भगवता काचित् लीला रचिता । रङ्गनाथचरणैकसंसक्तः तदितरविषयवस्तुषु ईषदपि अनासक्तः अयं विप्रनारायणः कथञ्चित् देवदेवी इत्यस्याः प्रेमपाशेन बद्धः अभवत् । प्रमत्तः इव सः भगवदाराधनात् स्वानुष्ठानाच्च विमुखः तस्याः दासः संवृत्तः । तस्याः संसर्गस्य दुष्परिणामतः अकृतचौर्यः अपि सः कारावासदण्डम् अन्वभवत् । अन्ततः क्षमास्वरूपायाः देव्याः रङ्गवल्लभायाः कृपापात्रतां गतः सः श्रीरङ्गेशेन रक्षितोऽभवत् ।

विहितपापकर्मणः निष्कृत्यै सः भागवतचरणामृतपानम् अकरोत् । तेषां पादधूलिं शिरसा अधारयच्च । तस्मात् भक्ताङ्घ्रिरेणुः इत्यभिधानं लब्ध्वा नियतात्मा सः आशरीरपातं श्रीरङ्गेशमेव अभजत ।

## २.११. मुनिवाहनः / तिरुप्पाणाळ्वार्

**कार्तिके रोहिणीजातं श्रीपाणं निचुळापुरे ।**
**श्रीवत्सांशं गायकेन्द्रं मुनिवाहनमाश्रये ॥**

तिरुचिरापल्लिनिकटे निचुळापुरं (उरैयूर्) नामकं नगरमस्ति । समृद्ध-चोळसाम्राज्यस्य आढ्या राजधानी सा । तत्रस्थाः 'पाणर्'जनाः गन्धर्वाः इव गाने वाद्यवादने च कुशलाः आसन् । किन्तु अनुच्चं तत्कुलम् इति तदानीन्तनी समाजिकी रीतिः । तस्मिन् 'पाणर्'कुले सम्भूतः श्रीविष्णोः श्रीवत्सलाञ्छनस्य अंशः तिरुप्पाणाळ्वार् कवीश्वरः इत्यपि प्रख्यातः।

नित्यं कावेर्यां स्नात्वा श्रीरङ्गनाथालयाभिमुखं स्थितः ऊर्ध्वपुण्ड्रतुलसीमालाधरः वीणापाणिः भगवत्कीर्तनरतः भवति स्म तिरुप्पाणाळ्वार् । श्रीरङ्गेशार्पितचित्तः सः ध्यानावस्थायां भगवतः दर्शनसमानाकार-साक्षात्कारं प्राप्नुवन् विसंज्ञः भवति स्म बाह्यलोकं प्रति ।

लोकसारङ्गमुनिनामकः विप्रः श्रीरङ्गेशालये भगवत्सेवार्थी । कावेरीतीरात् भगवदाराधनार्थं जलानयनमार्गे निद्राणम् इव एनं दृष्ट्वा सः पुनःपुनः 'अपसर मार्गात्, अपसर' इत्यवदत् । तथापि निश्चलस्य तस्योपरि सः दूरादेव लघुशिलाखण्डमेकम् अक्षिपत् ।

तदा यत् संवृत्तं तस्मात् लोकसारङ्गमुनिः स्तब्धः अभूत् । मन्दिरद्वाराणि असमये स्वतः एव पिहितान्यभूवन् इति ज्ञातवतः तस्य महती भीतिः सञ्जाता । तस्यां रात्रौ श्रीरङ्गेशः स्वप्नमुखेन तम् अवदत् - 'मां अश्मखण्डेन प्रहृतवान् त्वमद्य, मागच्छ मत्समीपम्' इति । **'ज्ञानी त्वात्मैव मे मतम्' - (९/१८)** इति उदीरितं खलु गीताचार्येण श्रीकृष्णेन ।

पश्चात्तापाग्नौ तप्यमानं लोकसारङ्गमुनिम् अन्येद्युः भगवान् - 'मुने ! पुण्यात्मानं मद्भक्तं तम् इहानय' इति आदिशत् । सः आळ्वार्-समीपं धावितः । बद्धाञ्जलिः तं स्वेन सहागन्तुम् अयाचत च । किन्तु सङ्कोचवशात् आळ्वार् तत्रैव स्थितः । तदा मुनिः तं स्कन्धाभ्याम् उद्वहन् आलयस्य त्रीन् प्राकारान् तीर्त्वा देवदेवसन्निधिं प्रति अगच्छत् । श्रीरङ्गेशकीर्तनमग्नः सः सर्वेषु पश्यत्सु तच्चरणाम्बुजं प्रापत् । भगवत्पादादिकेशान्तवर्णनपरम् 'अमलनादिपिरान्'नामकं ध्येयं मधुरं गीतं तत् ।

## २.१२. परकालः / तिरुमङ्गै आळ्वार्

**कार्तिके कृत्तिकाजातं चतुष्कविशिखामणिम् ।**
**षट्प्रबन्धकृतं शार्ङ्गमूर्तिं कलियमाश्रये ॥**

श्रीमहाविष्णोः कार्मुकांशः अयम् अष्टमे शतके 'कळ्ळर्' इति शूराणां कुले जातः । नीलन् नाम अस्य । चोळराजस्य पराक्रमिणः समरविजयिनः सेनाध्यक्षाद् अस्मात् शत्रवः बिभ्यति स्म । शत्रूणां 'परकालः' (अन्तकः) इति प्रथिताय अस्मै चोळराजः 'तिरुमङ्गै'प्रान्तस्य सामन्तपदम् अयच्छत् ।

कुमुदवल्ली इति बुद्धिमत्या रूपवत्या कन्यया आकृष्टः रूपसम्पन्नः सः तां परिणेतुम् ऐच्छत् । सा पितृमुखेन सूचितवती - 'यः पञ्चसंस्कारविधिपूर्वकं भगवतः श्रीमन्नारायणस्य दासत्वं भजति यश्च सहस्रं भागवतान् संवत्सरकालं यावत् प्रत्यहं भोजनसेवनेन सत्करिष्यति तस्यैव भार्या भविष्यामि' इति ।

विषयसुखैकरतम् असौम्यस्वभाववन्तं जनं दीक्षयितुं को वा सत्पुरुषः अङ्गीकुर्यात् ? परं निर्हेतुकी किल भगवत्कृपा । नीलन् तदर्थयितुं *तिरुनारैयूर्-मन्दिरे*[1] भगवत्सन्निधिम् उपगतः । भगवता विहितपञ्चसंस्कारः तिरुमङ्गैनायकः द्वितीयसमयस्य पालनाय वचनं दत्त्वा कुमुदवल्लीं पर्यणयत् । भागवतसत्कृति-निमित्तकात् धनव्ययात् यदा सः क्षीणधनः जातः तदा स्वकार्यसम्पादनाय राज्ञे देयं करधनम् आहरति स्म । जातक्रोधः राजा तं ग्रहीतुं भटान् प्रेषितवान् । परं ते भटाः तेन द्राविताः ।

क्रमेण तेन धनिकेभ्यः धनापहरणम् आरब्धम् । कार्येऽस्मिन् 'आडल्-मा' इति अश्वः चत्वारः सचिवाश्च तस्य सहायाः भवन्ति स्म । सचिवाः एते असाधारणशक्तियुक्ताः । प्रथमः जलोपरि चलितुं शक्तः । द्वितीयः अन्यस्य छायायाम् आत्मगोपने क्षमः । तृतीयः फूत्कारमात्रेण द्वाराणाम् अवकीलने समर्थः । चतुर्थः वादेषु अजेयः । एकदा परिपन्थकाः एते कौचित् धनिकौ युवदम्पती परिवार्य स्थिताः। स्मितवदनौ वधूवरौ तौ तत्र प्रसारिते वस्त्रे सर्वाणि आभरणानि

---

[1] कुम्भकोणनगरस्य समीपे स्थितं मन्दिरमिदं 'सुगन्धगिरिः' 'श्रीवासक्षेत्रं' 'नाच्चियार्-कोविल्' 'कल्-गरुडर्-कोविल्' (कोविल् = मन्दिरम्) इति नामभिः प्रसिद्धम् । 'पेरियतिरुमोलि'नामके प्रबन्धे तिरुमङ्गै-आळ्वार् अस्य आलयस्य निर्मापयितारं 'कोच्चेङ्गण्'-चोळराजम् अधिकृत्य नव पद्यानि अगायत् ।

स्थापितवन्तौ । किन्तु आभरणबन्धः सः तथा भारवान् यत् कोऽपि तं कम्पयितुं न प्रभवति स्म । तिरुमङ्गै तं वरं रहसि अपृच्छत् 'अपि मायावी त्वम् ?' इति । हसन्नवदत् स वरः 'साधूक्तं त्वया । एहि अत्र ! शिक्षयामि त्वाम्' । तदा तत्कर्णे अष्टाक्षरमन्त्रम् अजपत् सः । अनुक्षणे तिरोधानदशां गतौ तौ दम्पती । तत्पुरः तेजोलावण्यमयस्य लक्ष्मीसमेतनारायणस्य प्राकट्यम् अभूत् । इन्द्रियातीतस्य भगवतः दिव्यरूपे तत्कृपया एव गोचरीभूते सति तिरुमङ्गै-नायकः तिरुमङ्गै-आळ्वार् सञ्जातः ।

ततः भगवतः शासनात् सः दिव्यदेशयात्रायै प्रस्थितः । सः श्रीभद्राचल-सिंहाचल-श्रीकूर्म-पुरुषोत्तम(पुरी)-गया-गोकुल-वृन्दावन-मथुरा-द्वारका-अयोध्या-बदरीकाश्रम-काञ्ची-वेङ्कटाचलादिषु क्षेत्रेषु पुण्यतीर्थेषु स्नानं भगवद्दर्शनं च कुर्वन् आनन्दोल्लासेन भगवन्तम् अकीर्तयत् । एवं चतुरशीतौ (८४) दिव्यदेशेषु मङ्गलाशासनं कृत्वा सः दक्षिणदेशं प्रत्यागतः । तदा त्रिषष्ट्यां नायन्मार्-शिवभक्तवरेषु अन्यतमः तिरुज्ञानसम्बन्धः च अयं आळ्वार् च मिलितौ । अस्य कवित्त्वेन भक्त्या भागवतसेवया च प्रभावितः सम्बन्धमूर्तिः अस्मै शक्त्यायुधम् उपायनत्वेन प्रायच्छत् इति कथ्यते ।

श्रीरङ्गेशमन्दिरस्य[1] नवीकरणं संवर्धनं चापि अकारयत् तिरुमङ्गै-आळ्वार् । तिरुप्पाणाळ्वार्-कालपर्यन्तम् अस्य आलयस्य त्रयः प्राकाराः एव आसन् । तत्र प्राकारभित्तीनां पुनर्निर्माणं, नूतनगोपुर-शतस्थूणामण्डप-पाकशाला-भाण्डागारदशावतारसन्निध्यादीनां च निर्माणम् अकारयत् सः इति तदालयस्य इतिहासवृत्तलेखे उल्लिखितं वर्तते । आशुकाव्यं मधुरकाव्यं चित्रकाव्यं विस्तारकाव्यम् च इति चतुर्विधासु अपि काव्यरचनासु निपुणः अयम् आळ्वार् चतुष्कविः इति ख्यातनामा । अनेन रचिताः १२५३ पद्ययुत-षट्प्रबन्धाः वेदानां षडङ्गसमाः परिगण्यन्ते ।

*******

[1]कावेरी-कोळ्ळिडनद्योः अन्तरे विद्यमानः द्वीपः श्रीरङ्गप्रदेशः । अद्यत्वे १५६ एकर्-मित-विशालभूविस्तृत्यां श्रीरङ्गमन्दिरं विराजते । प्रणवाकारविमानं, ७ प्राकाराः, २१ उच्चगोपुराणि, सहस्र-स्थूणामण्डपः, कम्ब-रामायणमण्डपः, चन्द्रपुष्करिणी, चित्रशिल्पकलार्पितानि छदिभित्तिगोपुराणि, शुकमण्डपः इत्यादयः अस्य मन्दिरस्य वैभवातिशयस्य केचन अंशाः ।

# ३. पूर्वाचार्याः

आळ्वार्-योगिनां कालात् परतः च श्रीरामानुजकालात् पूर्वतश्च लब्धजन्मानः नैके वैष्णवाचार्याः आसन् । तैः उत्तरोत्तरं संरक्षितः सः सम्प्रदायः एव श्रीरामानुजकाले सुपोषितः इत्यतः श्रीरामानुजसम्प्रदायः अथवा श्रीसम्प्रदायः इत्यधुना आख्यायते ।

**लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् ।**
**अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥** श्रीकूरेशः (श्रीरामानुजशिष्यः)

## ३.१. श्रीनाथमुनिः

वैष्णवाचार्येषु नवमशतकस्य (क्रि.श.८२५-९१८) पूर्वार्धे अवतीर्णः श्रीनाथमुनिः प्रधानतमः आसीत् । दक्षिणभारते पाञ्चरात्रागमविधेः प्रवर्तकेषु अन्यतमः अयम् श्रीवैष्णवसम्प्रदायस्य प्रसाराय मार्गम् अकल्पयत । आदिशङ्कराचार्यः इव अयमाचार्योऽपि उत्तरदिशि बदरीनाथपर्यन्तं पश्चिमदिशि द्वारिकापुरीपर्यन्तं पूर्वस्यां जगन्नाथपर्यन्तं भारतस्य सुदूरस्थलानि प्रति यात्रामकरोत् ।

कलेः आरम्भप्रभृति कृतजीवनानाम् आळ्वार्-योगिनां भक्तिवाङ्मयम् अस्य आचार्यवरस्य कालपर्यन्तं प्रायः अव्यक्तमेव आसीत् ।

कदाचित् ***वीरनारायणपुरमन्दिरे***[1] श्रीनाथमुनिः कैश्चित् भक्तैः गीयमानानि रम्याणि तमिळ्-पद्यानि आकर्णयत् । शठारिकृतायाः सहस्रगीत्यन्तर्गतानि पद्यानि तानि । नाथमुनिः तान् अपृच्छत् - 'अयि भोः भक्ताः ! सुमधुराणि अर्थगर्भितानि इमानि केन प्रोक्तानि ? किमपि विवरीतुम् अशक्ताः ते अवदन् - '***कुरुकापुरी***[2] गम्यते चेत् विषयम् इमं प्रति किमपि ज्ञातुम् शक्येत ।' सपद्येव सः तत्र अगच्छत् । तत्र आळ्वार्-योगिषु अन्यतमस्य मधुरकवेः शिष्यान्वये आगतः पराङ्कुशदासः प्रतिवसति स्म । सः श्रीनाथमुनिं मधुरकविना गीतानि १० पद्यानि उद्बोध्य तम्

---

[1] **वीरनारायणपुरम्** (काट्टु-मन्नार्-कोविल्) - श्रीनाथमुनेः यामुनमुनेः च अवतारस्थलम् । कडलूर्-जनपदे विशालस्य 'वीराणं'ह्रदस्य तटे वर्तते इदं श्रीवीरनारायणमन्दिरम् ।
[2] ***कुरुकापुरी / तिरुक्कुरुगूर्*** - नम्माळ्वार्/शठारेः अवतारस्थलम् ।

अवोचत् - 'अस्य तिन्त्रिणीतरोः पुरतः आसीनः एषाम् एकादशानां पद्यानाम् आवर्तनं द्वादशसहस्रवारं करोतु' इति।

सः यथानिर्देशम् अविरततया तैः मधुरकविपद्यैः शठारिध्यानपरः समाधिगतप्रायः अवर्तत। अष्टाङ्गयोगसिद्ध्या ध्याने एवंविधा अवस्थितिः असकृत् भवति स्म तस्य योगीन्द्रस्य। तस्य तपसा प्रसन्नः शठारिः तदा प्रत्यक्षीभूयः समग्रं ४००० पद्ययुतं दिव्यप्रबन्धं तस्मै प्राकटयत्। तदा शठारिणा श्रीनाथमुनये *भविष्यदाचार्यविग्रहः*[1] अपि प्रदत्तः। अञ्जलिबद्धकरयुगलः विग्रहः सः श्रीरामानुजाचार्यः इति अनन्तरकाले विज्ञातः पूर्वाचार्यैः।

इत्थम् आळ्वार्-योगिनां मधुसरन्तीभिः वाग्भिः मधुरतमिल्भाषया रचिता श्रुत्यर्थप्रतिपाद्या श्रीहरिस्तुतिमयी दिव्यप्रबन्धमाला विभाति। अस्याः पद्यानां गणना -

| आळ्वार्-नाम | कस्य (अंशः) अवतारः | पद्यानां सङ्ख्या |
|---|---|---|
| सरोयोगी (पोय्गै-आळ्वार्) | पाञ्चजन्यः | 100 |
| भूतयोगी (भूतत्ताळ्वार्) | कौमोदकी | 100 |
| महदाह्वययोगी (पेय्-आळ्वार्) | नन्दकः | 100 |
| भक्तिसारः (तिरुमलिसै-आळ्वार्) | सुदर्शनः | 216 |
| शठारिः (नम्माळ्वार्) | विष्वक्सेनः | 1296 |
| मधुरकविः (मधुरकवि-आळ्वार्) | गणाधिपः | 11 |
| कुलशेखरराजः (कुलशेखर-आळ्वार्) | कौस्तुभः | 105 |
| विष्णुचित्तः (पेरिय-आळ्वार्) | गरुडः | 473 |
| श्रीगोदा (आण्डाळ्) | भूदेवी | 173 |
| भक्ताङ्घ्रिरेणुः (तोण्डरडिप्पोडि-आळ्वार्) | वैजयन्ती | 55 |
| मुनिवाहनः (तिरुप्पाण्-आळ्वार्) | श्रीवत्सः | 10 |
| परकालः (तिरुमङ्गै-आळ्वार्) | शार्ङ्गम् | 1253 |
| रामानुज-शतान्तादि | | 108 |

श्रीवैष्णवसम्प्रदायस्य प्रथमाचार्यः इति पूज्यते श्रीनाथमुनिः।

---

[1] ताम्रपर्णीजलस्य क्वथनेन सञ्जातः सः भविष्यदाचार्यविग्रहः कुरुकापुर्याम् आदिनाथमन्दिरे प्रतिष्ठापितः अस्ति।

नमोऽचिन्त्याद्भुताक्लिष्टज्ञानवैराग्यराशये ।
नाथाय मुनयेऽगाधभगवद्भक्तिसिन्धवे ॥ *श्रीयामुनमुनिः (स्तोत्ररत्ने)*

### ३.२. श्रीयामुनमुनिः

श्रीनाथमुनेः यशस्तरेषु शिष्येषु अन्यतमस्य श्रीपुण्डरीकाक्षस्य जीवनकालः नवमस्य शतकस्य उत्तरार्धे अवर्तत । अस्याचार्यस्य वरिष्ठशिष्यः श्रीराममिश्रः । श्रीराममिश्रस्य शिष्यः आसीत् श्रीनाथमुनेः पौत्रः श्रीयामुनाचार्यः । अतिमेधावी विचक्षणः श्रीयामुनमुनिः तत्कालीनवैष्णवसम्प्रदायपद्धत्या विद्याम् अलभत । अस्याचार्यस्य जीवितकालः क्रि.श. ९१६-१०४२.

पञ्चदशे वयसि एव पाण्ड्यराजसभायां वादे जयं प्राप्य सः पुरस्काररूपेण राज्यस्य अर्धभागमेव अविन्दत् । अतः तौ राजदम्पती 'आळवन्दार्' (शासितुमागतः) इति तस्य नामकरणम् अकुरुताम् । व्याकरणशास्त्रे पारङ्गतः श्रीयामुनमुनिः महाभाष्यभट्टः इत्यपि प्रकीर्त्यते । अनन्तरकालीनः श्रीरामानुजः इव श्रीयामुनाचार्यः अपि गार्हस्थ्यं परित्यज्य काषायं परिगृह्य निःशेषपारमार्थिकः समजायत ।

श्रीरङ्गम् अधिवसन् दर्शनग्रन्थान् विरचयन् श्रोतॄन् *विशिष्टाद्वैतसिद्धान्तम्*[1] उद्बोधयन् देवदेवं श्रीरङ्गेशम् उपासीनः संन्यासधर्मम् अन्वतिष्ठत् श्रीयामुनमुनिः । ईश्वरसिद्धिः संवित्सिद्धिः आत्मसिद्धिः च इति सिद्धित्रयम्, आगमप्रामाण्यं, पुरुषनिर्णयः, गीतार्थसङ्ग्रहः चतुःश्लोकी, स्तोत्ररत्नं च इत्येते यामुनाचार्यप्रणीताः अद्भुताः अष्ट ग्रन्थाः ।

इहलोकव्यापारात् निवृत्तेः पूर्वं सः - 'श्रीरङ्गभूम्यामेव वैष्णवमतस्य परिरक्षितृरूपेण रामानुजं सुप्रतिष्ठितं दिदृक्षुः अहम्' इति शिष्यप्रवराणां सविधे स्वाभिलाषं व्यज्ञापयत् ।

**यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः**
**वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥**- श्रीरामानुजाचार्यः

*********

---

[1] विशिष्टाद्वैतम् - परिशिष्टभागः दृश्यताम्

# ४. श्रीरामानुजाचार्यः

आसीत् कश्चन भारतवर्षस्य दक्षिणभागे लब्धजन्मा महाप्राज्ञः। अस्य उदात्तव्यक्तित्वेन प्रभावितः सन् कश्चन नृपः स्वयं वैष्णवमतानुयायी सञ्जातः । अनेनैव पुनः क्वचित् प्रचण्डवादेषु प्रतिवादिनः पराजिताः । अयमासीत् आदिशेषस्य अवतारः श्रीरामानुजाचार्यः ।

यावद् वैष्णवमतं स्थास्यति यावत् श्रीरामानुजाचार्यस्य श्रीभाष्यं गीताभाष्यं च स्थास्यति तावत् सः लोके पूज्यते इत्यत्र नास्ति संशयः । स्वबुद्धिसौक्ष्म्येण वेदान्तस्य विस्तृताधीत्या सत्यसन्धतया उदारचरिततया च अयं दक्षिणभारते नवेतिहासमेव अरचयत्। व्यावहारिकतलेऽपि किमपि युगप्रवर्तकमेव तस्य चरितम्। तस्य समकाले नवीकृताः वैष्णवालयाः अद्यापि सम्प्रदायानुवर्तनस्य समाजपोषणस्य च केन्द्रत्वेन विद्यन्ते । तस्य वर्चस्वितायाः हेतोः दक्षिणभारते एव न अपि तु इतरप्रान्तेष्वपि तदीयसत्कर्मणां परिणामः दृष्टिगोचरः भवति ।

### ४.१. जननं बाल्यञ्च

श्रीशैलपूर्णनामकः श्रीयामुनाचार्यशिष्यः वेङ्कटाचलपतिसन्निधौ कैङ्कर्यपरायणः सन् तत्रैव (तिरुपतौ) निवसति स्म । अस्य सोदर्ययोः अन्यतरा कान्तिमती भूतपुरीवासिना श्रीकेशवसोमयाजिना परिणीता । चेन्नैनगरात् ३० कि.मी.मिते दूरे वर्तते इयं श्रीभूतपुरी । इदं क्षेत्रम् अद्यत्वे श्रीपेरुम्बुदूर् इति नाम्ना प्रसिद्धमस्ति । १०१७ वर्षस्य चैत्रमासे कान्तिमत्यां पुंशिशुः अजायत । इमां शुभवार्तां श्रुत्वा मातुलः श्रीशैलपूर्णः झटिति वेङ्कटाचलात् अवतीर्य श्रीभूतपुरीं यातः । शिशोः तेजस्वि चारु मुखमालोक्य सः प्रमुदितः । भगवतः श्रीरामस्य धीमन्तम् अनुजं लक्ष्मणम् इव प्रतीयमानं तं शिशुं सः तन्नाम्ना एव व्यपादिशत् । इत्थं स शिशुः लक्ष्मणमुनिः रामानुजः चेति नामनी अलभत ।

'मेधावी भविता अयं', 'धर्मप्रचारे अप्रतिमः च भविता' इत्यवदन् शिशोः जन्मपत्रिकां परिकल्पितवन्तः ज्योतिषिकाः । विद्वत्कुलोत्पन्नता च आजन्मबुद्धिमत्ता च इत्यनयोः विरलागतसमन्वयः तस्य अतुलप्रज्ञायां हेतुरासीत् ।

बालस्य अस्य पालने तत्पितरौ कान्तिमतीकेशवसोमयाजिनौ मातुलः श्रीशैलपूर्णः च दत्तश्रद्धाः आसन्। योग्ये वयसि तस्य विधिवत् यज्ञोपवीतधारणं च अकारयन्।

बाल्ये रामानुजः पितुः मातुलात् च शास्त्रविद्याम् अध्यगच्छत्। तदानीमेव तस्य असाधारणं बुद्धिप्रागल्भ्यम् अभिव्यज्यते स्म। विद्वांसः तम् अतिमानुषप्रतिभावन्तम् अमन्यन्त।

## ४.२. विवाहः प्रगताध्ययनं च

पुत्रे षोडशवर्षदेशीये जाते मत्पुत्रः अधुना गृहस्थाश्रमप्रवेशयोग्यः सञ्जातः इति अचिन्तयत् केशवसोमयाजिवर्यः। कान्तिमती-सोमयाजिदम्पत्योः सुपरिचितकुटुम्बस्य रक्षकाम्बा-नामिकया कन्यया सह तस्य विवाहसंस्कारः सम्पन्नः। स्वभावतः स्निग्धा सुभगा नवोढा इयं पतिगेहे नितरां तृप्ता सती कालमनयत्।

पुत्रस्य विवाहसंस्कारात् परम् अचिरादेव श्रीकेशवसोमयाजिवर्यस्य ऐहिकं जीवनं विरतम्। शोकसन्तप्तः श्रीरामानुजः भूतपुर्यां पितुः और्ध्वदेहिकक्रियाः श्रद्धया निरवर्तयत्। पितुः इत्थम् अनीरिक्षितकाले देहावसानं यद्यपि तं शोकाकुलम् अकरोत् तथापि परिशोचन्तीं मातरं सान्त्वयितुं सः शीघ्रमेव धृतिम् अवालम्बत।

अखण्डचित्तः सः कालहानिं परिहरन् वेदान्तस्य अध्ययनाय उचितं किञ्चन गुरुकुलं प्रवेष्टुमैच्छत्। वेदानां वेदाङ्गानां च अध्ययनं कृतवान् षोडशवयस्कः सः सततं श्रुतिवाक्यानां ब्रह्मसूत्राणां च मननं कुर्वन्नास्ते स्म। परमं तत्त्वं जिज्ञासमानः सः अचिन्तयत् यत् 'कस्यचित् तत्त्वविदः आचार्यस्य सकाशात् विद्याम् अधिगच्छेयं येन मम इयं तत्त्वजिज्ञासारूपा तृष्णा उपशाम्येत्' इति।

## ४.३. गुरुकुलप्रवेशः

अचिरप्रतीक्षायाः अनन्तरमेव श्रीरामानुजः अभीष्टाय वेदान्ताध्ययनाय किञ्चन गुरुकुलं प्रति अजानात्। काञ्च्याः समीपवर्तिनि 'तिरुप्पुट्कुऴि'नामके ग्रामे यादवप्रकाशस्य गुरुकुलम् आसीत्। अद्वैतदर्शनविदः अस्य आचार्यस्य गुरुकुले युवानः अधीयते स्म।

मातृभगिनीपुत्रेण गोविन्देन सह श्रीरामानुजः यादवप्रकाशम् उपगत्य तदीये गुरुकुले प्रवेशाय अनुमतिं प्रार्थयत। प्रविष्टगुरुकुलौ उभावपि यथानियमम् अन्तेवासिनौ

सन्तौ शास्त्राध्ययनम् आरभेताम्। तस्यां शिष्यगोष्ठ्यां रामानुजः आशु श्रेष्ठस्थानम् अभजत। तीक्ष्णबुद्धिमन्तम् उत्साहिनं तं दृष्ट्वा गुरुः विद्यार्थिनश्च आश्चर्यान्विताः। वादप्रतिवादेषु युक्तिपुरःसरं स्वमतप्रतिपादनं कृत्वा इतरान् विस्माययति स्म श्रीरामानुजः।

कदाचित् गुरुकुले छान्दोग्योपनिषदः अध्ययनं प्रावर्तत। गुरुः श्रीयादवप्रकाशः **'तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी. - १.६.७'** इत्यस्य मन्त्रस्य अर्थं 'तस्य हिरण्मयपुरुषस्य पुण्डरीकाक्षिणी कपेः आससदृशे लोहिते' इति अबोधयत्। परमपुरुषनयनयोः तथा अनुपपन्नतया उपमितिकरणं श्रीरामानुजं विषण्णम् अकरोत्। रात्रौ यदा श्रीरामानुजः शयानं गुरुं सेवमानः आसीत् तदा तस्य नयनाभ्यां निःसृतः अश्रुबिन्दुः गुरोरङ्के न्यपतत्। एतेन प्रबुद्धः गुरुः तम् अपृच्छत् - 'बाष्पोद्गतिरियं कुतः' इति। सः शान्तस्वरेण तस्य मन्त्रभागस्य निर्वचनं गुरवे अकथयत्।

'कं (जलं) पिबति इति कपिः (सूर्यः)। 'अस' गत्यादौ इति धातोः निष्पन्नः 'आस'शब्दः। अतः 'कप्यास'पदस्य 'सूर्येण विकसित' इति निर्वचनं कृत्वा 'अन्तरादित्ये यः हिरण्मयः पुरुषः तस्य अक्षिणी सूर्यकिरणैः विकसिते पुण्डरीके इव सुन्दरे' इति मन्त्रभागस्य व्याख्यानं प्रत्यपादयत् श्रीरामानुजः।

अस्याः घटनायाः परं गुरुशिष्ययोः सौहार्दे काचित् शिथिलता अजायत। ततः असूयाविष्टः यादवप्रकाशः काशीयात्राव्याजेन रामानुजं नीत्वा गङ्गायां मज्जयित्वा तं व्यापादयेम इति इतरशिष्यैः सह छद्मयुक्तिम् अकल्पयत्।

श्रीरामानुजः सपदि यात्रार्थं सज्जः अभूत्। विन्ध्यप्रान्तस्य अन्तिकात् यात्रागोष्ठ्यां प्राप्तवत्याम् आप्तबन्धुः गोविन्दः तेषां भयावहं दुराशयं श्रीरामानुजम् अवेदयत्। तं सत्वरं ततः पलायितुं च अचोदयत्।

प्रतिगमनमार्गं कमपि अजानता श्रीरामानुजेन कश्चन वनप्रदेशः प्राप्तः। तत्र यदृच्छया कौचित् किरातदम्पती दृष्टौ। 'सत्यव्रतक्षेत्रं (काञ्चीं) प्रति गमनाय मार्गः कः' इति पृष्टवन्तं रामानुजं तौ 'आयाहि, आवामपि तद्दिशमेव गच्छाव' इत्यवदताम्। त्रयः अपि ते आरात्रि वनमार्गं क्रान्त्वा प्रातः किञ्चन स्थानं प्राप्नुवन्। तदा किराती रामानुजं - 'वत्स, पिपासा बाधते, समीपस्थात् कस्माच्चित् कूपात् जलमानय' इत्यवदत्। यावत् जलसहितः श्रीरामानुजः प्रत्यागतः तावता तौ व्याधदम्पती

मायया ततः विनिर्गतौ। तस्मात् कूपात् अनतिदूरे एव द्वित्रान् जनान् दृष्ट्वा सः 'भोः श्रीमन्तः! कोऽयं प्रदेशः' इति अपृच्छत्। 'काञ्ची' इत्युत्तरमाकर्ण्य अतीव

विस्मयापन्नः सः। पुरः भ्राजमानं *श्रीवरदालयगोपुरं*[1] दृष्ट्वा सः प्राञ्जलिः स्थितः। क्व विन्ध्याटवी क्व च काञ्ची। पद्भ्यामेव एकरात्रिकालावधिं केवलं प्रयाय इहागमनं कथं नु साध्यम्?

लोके सामान्यतः जनाः स्वार्थपराः। ते आर्तिनाशाय अर्थलाभाय वा देवं प्रार्थयन्ते। किन्तु महात्मनां गतिरेव काचिद् अन्या। तेषां भक्तिः अहैतुकी। कुन्तीदेवी यथा कृष्णं विपदः अयाचत तथा रामानुजः अपि श्रीवरदराजदेवस्य अनवधिककृपामेव अन्वस्मरत्।

**विपदः सन्तु नः शश्वत्तत्र तत्र जगद्गुरो।**
**भवतो दर्शनं यत्स्यादपुनर्भवदर्शनम्॥ श्रीमद्भागवतम् १.८.२५**

आनन्दाश्रुनयनः सः तौ किरातदम्पती आदरेण संस्मरन् स्वग्रामम् उद्दिश्य पदं निदधत् गृहं प्राप्नोत्।

तत्रान्तरे सशिष्यः काशीतः प्रतिनिवृत्तः यादवप्रकाशः काञ्च्यां क्षेमेण स्थितं श्रीरामानुजम् आलोक्य चकितः। यद्यपि गुरुशिष्ययोः वैमनस्यम् उत्पन्नं तथापि सर्वमपि तदविगणय्य श्रीरामानुजः भूयः तस्मिन्नेव गुरुकुले अध्ययनम् अन्ववर्तत।

### ४.४. मतभेदात् गुरुकुलत्यागः

अभिनवविद्वान् अलौकिकशक्तिसम्पन्नः चेति शनैः शनैः श्रीरामानुजस्य ख्यातिः प्रसृता। कदाचित् तादृश्याः शक्तेः प्रकटनस्य अवकाशः अपि समुत्पन्नः। किन्तु विद्वत्तायाः वा तपःसिद्धेः वा अपेक्षया अपि भगवति तस्य निर्व्याजः विशुद्धः स्नेहार्द्रः भक्तिभावः यः आसीत् तेन सः मित्रबन्धूनां च गुरुकुलस्थानां च तटस्थानां च मार्गभ्रष्टविरोधिनां चेति सर्वेषाम् आत्मीयताम् आर्जयत्।

---

[1] **काञ्चीवरदराजमन्दिरम्** - कृतयुगे ब्रह्मदेवः श्रीमन्नारायणस्य प्रत्यक्षदर्शनं काङ्क्षन् अश्वमेधयज्ञम् अन्वतिष्ठत्। अस्य यज्ञस्य अनुष्ठानाय विश्वकर्मणा सत्यव्रतनगरी (काञ्ची) निर्मिता। हस्तिगिरिः एव यज्ञवेदिका आसीत्। तस्मिन् पवित्रयागाग्नौ पुण्यकोटिविमाने पञ्चायुधधरस्य श्रीदेवीभूदेवीसमेतवरदराजस्य प्रादुर्भावः अभवत्।

अथ कदाचित् काञ्चीनृपः श्रीयादवप्रकाशम् आहूय 'व्याकुलचित्ता मत्पुत्री ब्रह्मरक्षोग्रसनात् विमोचनीया' इति प्रार्थयत । सोऽपि नृपस्य अभ्यर्थनाम् अङ्गीकृत्य शिष्यैः सार्धं राजप्रासादम् असीदत् । किन्तु तस्य मन्त्रोच्चारणं मोघीभूतम् । अन्ततो गत्वा तद्ब्रह्मरक्षः उज्जृम्भ्य आघोषयत् - 'अयि भोः यादवप्रकाश ! माम् अपद्रावयितुं नैव शक्नोषि त्वम् । ऋते रामानुजात् न कोऽपि अन्यः एतत् साधयितुम् अर्हति । सकृत् स्वस्य पवित्रचरणं मच्छिरसि निधाय 'इतः अपगच्छ' इति यदि सः माम् आदिशेत् तर्हि तदहं परमं भाग्यं मंस्ये ।'

क्षिप्रं रामानुजः गुरुणा तत्र समाहूतः । सः स्वपादेन राजकुमार्याः शिरः स्पृशन् मन्त्रोच्चारणमकरोत् । सपद्येव तत् ब्रह्मरक्षः राजकुमार्याः भवनात् निर्गच्छत् अवदत् 'यादवप्रकाश ! विमोघं तवाद्य कृत्स्नमप्यध्ययनम् । तेजस्वी दिव्यशक्तिसम्पन्नोऽयं रामानुजः लोकरक्षकः भविता । विद्धि मे वचनमिदम् ।'

अस्याः घटनायाः परं यादवप्रकाशः तस्मै भूयसा असूयति स्म । बहुशः तस्य व्याख्यानेषु निर्वचनेषु वा रामानुजस्यापि असम्मतिः आसीत् । एवं सति सहसा यादवप्रकाशगुरुकुले तस्य अध्ययनम् अवसन्नम् ।

### ४.५. श्रीकाञ्चीपूर्णस्य सत्सङ्गतिः श्रीवरदराजस्य सेवा च

पश्चात् श्रीरामानुजः काञ्चीं गत्वा श्रीयामुनाचार्यस्य शिष्येषु अन्यतमस्य श्रीकाञ्चीपूर्णस्य सत्सङ्गम् अभजत । वैश्यकुलसम्भूते भागवतोत्तमे तिरुकच्चि-नम्बि-नाम्नि तस्मिन् आद्रियन्ते स्म तत्प्रदेशजनाः । सः श्रीरामानुजं भगवतः श्रीवरदराजस्य आराधनाय कस्माच्चित् *कूपात्*[1] जलाहरणकैङ्कर्ये न्ययोजयत् । श्रीरामानुजस्तु ईदृशकैङ्कर्यलाभं परमं भाग्यं मत्वा अनुदिनं श्रीवरदराजदेवस्य सेवायाम् आत्मानं व्यापारयत् । कतिपयवर्षाणि अतीतानि । अत्रान्तरे तस्य जनन्याः कान्तिमत्याः ऐहिकं जीवनं विरतम् ।

भक्तिभावसिक्तचेतसोः श्रीकाञ्चीपूर्णरामानुजयोः आत्मीयता मिथः समवर्धत । श्रीकाञ्चीपूर्णः वरदराजभगवतः सन्निधौ चामरवीजनकैङ्कर्यरतः भवति स्म । तथा वीजनं कुर्वता काञ्चीपूर्णेन सह अर्चामूर्तिरूपः श्रीवरदराजः सम्भाषते स्म ।

---

[1] अस्य कूपस्य समीपे किरातवेषधरौ दिव्यदम्पती महादेवीवरदराजौ श्रीरामानुजं प्रापयताम् । श्रीकाञ्चीवरदालयात् ७. कि.मी.मिते दूरे स्थितः अयं सालकूपः अद्यापि द्रष्टुं शक्यः ।

देवराजदयापात्रं श्रीकाञ्चीपूर्णमुत्तमम् ।
रामानुजमुनेर्मान्यं वन्देऽहं सज्जनाश्रयम् ॥

महात्मना अनेन संस्कृतेन दास्यभक्तिभावनिष्यन्दि श्रीदेवराजाष्टकस्तोत्रं रचितम् ।

### ४.६. श्रीरामानुजः श्रीयामुनाचार्यश्च

आचार्यप्रवरः श्रीयामुनमुनिः श्रीरङ्गमधिवसन् श्रीवैष्णवसम्प्रदायस्य अग्रयायी सन् सम्प्रदायस्य वर्धनाय परिश्राम्यति स्म । वार्धकदशायां कार्यमिदम् अग्रे नेतुं सः कञ्चन योग्यं शिष्यम् अन्विष्यति स्म । प्राप्ते काले तादृशस्य महापुरुषस्य अवतारः अवश्यं भविष्यति यः जगदुद्धारकः सन् दोषभाजं लोकं धर्मसृत्या मुक्तिं प्रति नेष्यति इति तस्य दृढविश्वासः । कदाचित् श्रीयामुनाचार्यः काञ्चीस्थे श्रीवरदराजालयप्राकारे श्रीयादवप्रकाशेन सहागते शिष्यवृन्दे श्रीरामानुजं दूरादेव कटाक्षैः अन्वग्रहीत् । किं नु मया अन्विष्यमाणः शिष्यः (भविष्यदाचार्यः) एष एव इति व्यचारयत् तदा श्रीयामुनमुनिः।

श्रीरङ्गं प्रतिनिवृत्य तेन चिन्तितं यत् रामानुजः अत्र आगतः चेत् बहूनि कार्याणि सम्पद्येरन् इति । सः सपद्येव तस्य आनयनाय श्रीमहापूर्णनामकं स्वशिष्यं काञ्चीं प्रति प्राहिणोत् । क्रि.श. १०४२तमे वर्षे इदं प्रवृत्तम् ।

श्रीमहापूर्णस्तु काञ्चीम् आसाद्य श्रीकाञ्चीपूर्णं च उपसाद्य स्वागमनोद्देशं साधयितुं तस्य साहाय्यं प्रार्थयत । ततः सः रामानुजेन मेलितुम् अगच्छत् तमवदच्च - 'आ बहोः कालात् त्वां प्रत्यक्षं दिदृक्षवः अस्मदाचार्याः । अतः श्रीरङ्गं प्रति त्वां नेतुम् इच्छया इहागतोऽस्मि । मया सह आगच्छेः इत्याशासे' इति ।

भगवद्यामुनाचार्याणां तत्पूर्वाचार्याणां च महिमा आबाल्यम् आकर्णितः श्रीरामानुजेन । अतः सादरं तदीयाम् अनुज्ञाम् अभ्युपागच्छत् सः । श्रीमहापूर्णस्य सौहार्दं भावयन् तस्मै कृतज्ञताञ्च व्यज्ञापयत् । काञ्चीतः श्रीरङ्गदिशि प्रस्थितौ उभौ कतिपयदिवसानन्तरं कावेरीनद्याः उत्तरतीरं प्राप्नुताम् । तत्र दूरादेव कश्चन जनसमूहः दृष्टः यश्च शोकतप्तः प्रतीयते स्म । श्रीयामुनाचार्यः प्राणान् अत्यजत् इति ज्ञातम् । तत्रत्याः जनाः तस्य और्ध्वदेहिकक्रियासु व्यापृताः दृष्टाः । शोकविदूनः श्रीरामानुजः तदा - 'हा हन्त! महामुनेः तस्य कृपाकटाक्षात् वञ्चितः हतभाग्यः अहम् ! कच्चित् तस्य महात्मनः पावनपार्थिवदेहस्य दर्शनलाभः अपि न भवेत् किम् ?' इत्याशङ्क्य कृच्छ्रेण आत्मानं संयम्य सः तत् स्थलं प्रति वेगेन अगच्छत् ।

तत्र आश्चर्यं नाम आचार्यस्य अङ्गुलित्रयम् आभुग्नम् आसीत् । इदम् अवलोक्य श्रीरामानुजः तत्र विद्यमानं कञ्चन अपृच्छत् 'किमिदम् अङ्गुलीनां भुग्नत्वं सामान्यम् ? उताहो सन्ति किम् आचार्याणाम् अपरिसमाप्तकृत्यानि ?' स जनः - 'प्राणत्यागात्पूर्वम् आत्मनः अपूर्णमनोरथानां प्रकटनावसरे आचार्यः तान् गणयन्निव दृष्टः शिष्यैः' इत्यब्रवीत् ।

के ते मनोरथाः? इति पृष्टवते श्रीरामानुजाय स जनः तान् त्रीन् मनोरथान् अपि अज्ञापयत् -

- ब्रह्मसूत्राणां विशिष्टाद्वैतसिद्धान्तपरं भाष्यकरणम् ।
- शठारिसूक्तेः (नम्माळ्वार् 'तिरुवाय्मोळि') व्याख्यानरचनं तथा आळ्वार्-सूक्तीनाम् आधारेण श्रीवैष्णवमतप्रचारः ।
- विष्णुपुराणकर्तारं पराशरमुनिं प्रति च श्रुतीनां संविभक्तारं ब्रह्मसूत्रादिकर्तारं वेदव्यासमुनिं प्रति च कृतज्ञतास्मृतिः।

एतत् श्रुत्वा आर्द्रमनाः श्रीरामानुजः भगवदनुग्रहेण गुरोः अभिलाषपूर्तिं करिष्याम्यहम् इति तदा एव सङ्कल्पम् अकरोत् । तस्मिन् इत्थं प्रतिज्ञातवति एव अहहा ! दृढभुग्नाः ताः अङ्गुल्यः स्वतः शिथिलीभूय ऋज्व्यः जाताः । विस्मापिकां इमां घटनां साक्षात्कृतवद्भिः जनैः यामुनाङ्गुलिमोचकोऽयम् ! महाप्राज्ञोऽयम् ! अस्मद्रक्षकोऽयम् ! इत्यादि वचनम् उदीरितम् । इत्थं श्रीरामानुजः युवत्वे एव गरीयः स्थानम् अभजत ।

भगवद्यामुनकृपाकटाक्षस्य अलाभात् अतिमात्रेण शोकसन्तप्तः श्रीरामानुजः तस्य उत्तरक्रियायाम् उपस्थाय श्रीरङ्गेशस्य दर्शनम् अकृत्वैव काञ्चीं प्रत्यागच्छत् । श्रीकाञ्चीपूर्णस्य सत्सङ्गे सन् तीर्थकैङ्कर्यम् च अन्ववर्तत ।

*********

# ५. संन्यासः

## ५.१. अविच्छिन्ना भगवत्सिसेविषा वैराग्यं च

श्रीकाञ्चीपूर्णस्य भक्तिभावेन साधुस्वभावेन च नितरां प्रभावितः आसीत् श्रीरामानुजः इति सुविदितमेव । श्रीरङ्गतः प्रत्यागमनात्परं सः श्रीकाञ्चीपूर्णस्य सत्सङ्गे अधिकतरं कालं यापयति स्म । एकदा स तं 'स्वामिन् ! भगवतः वरदस्य अनन्यभक्तो हि भवान् । मां शिष्यत्वेन स्वीकृत्य अनुगृह्णातु' इति प्रणतिपुरःसरं प्रार्थयत । श्रीकाञ्चीपूर्णः तं स्कन्धयोः गृह्णन् उत्थापयन् अवदत् - 'अहं तव गुरुर्भवितुम् अनर्हः । किन्तु वत्स ! मा व्यथस्व ! आचार्यं महापूर्णम् उपसृत्य सम्प्रदायसारं विद्धि !' इति । रामानुजस्तु 'कच्चित् अस्य भागवदोत्तमस्य शिष्यः भवितुं योग्यता मयि न विद्यते !' इति खिद्यमानः आत्मशुद्धये मार्गम् अन्वचिन्तयत् । तस्य महात्मनः भुक्तावशेषं यदि प्रसादरूपेण भुञ्ज्यां तर्हि कदाचित् पात्रतां यास्यामि इति धिया श्रीकाञ्चीपूर्णं भोजनाय स्वगृहमामन्त्रयत ।

अन्येद्युः पत्नीं पक्तुम् उपदिश्य श्रीरामानुजः श्रीकाञ्चीपूर्णं विचिन्वन् वरदालयं प्रति प्रस्थितः । अत्रान्तरे श्रीरामानुजगृहं प्राप्तः श्रीकाञ्चीपूर्णः तत्पत्नीं रक्षकाम्बाम् 'अम्ब ! किमपि मुख्यं कार्यम् आपतितं, गन्तव्यम् मया, अतः भोजनं परिविष्यताम्' इत्यवदत् । सापि आदरेण तं सत्कृतवती । सः भुक्त्वा त्वरया ततः निरगच्छत् ।

देवालये श्रीकाञ्चीपूर्णम् अपश्यन् श्रीरामानुजः प्रत्यागत्य अपश्यद्यत् तस्मै भक्ताय यस्मिन् पर्णे भोजनं परिविष्टं रक्षकाम्बया तद् अपास्तम् । न केवलं तत् तस्य कृते निर्मितं भोजनावशेषमपि तया विसृष्टम् । पाकगृहस्य शुद्धिं विधाय स्नात्वा पुनरपि पत्युः कृते पक्तुमुद्युक्ता सा । श्रीकाञ्चीपूर्णस्य प्रसादस्य अलाभात् पत्न्याः भेदभावनापूर्णव्यवहाराच्च सः अत्यन्तं व्यथितः अभवत् । ततः प्रभृति वैराग्यभावः तस्मिन् क्रमेण विजृम्भते स्म ।

संन्यासाश्रमप्रवेशात् प्राग् विशिष्टाद्वैतदर्शनं तत्त्वतः विज्ञातुं श्रीरामानुजः परितृषितः आसीत् । एकदा स श्रीकाञ्चीपूर्णं प्रार्थयत - 'स्वामिन् ! कैश्चित् सन्देहैः मे मनः प्रमथ्यते । श्रीवरदराजस्य अनन्यं भक्तं भवन्तं वर्जयित्वा कं वा प्रार्थयेय । भगवन्तं वरदम् इदं निवेद्य मम संशयच्छेदनं साधयतु' इति । अन्येद्युः श्रीकाञ्चीपूर्णः तम् अब्रवीत् - वत्स ! ह्यः भगवता श्रीवरदेन इत्थं निगदितम् !



शठारिः (नम्माळ्वार्)   आल्वार्-तिरुनगर्याम् आदिनाथमन्दिरे तिन्त्रिणीतरुः यत्र सः 16 वर्षाणि न्यवसत्



नम्माळवार्-तः भविष्यदाचार्यविग्रहं प्राप्नुवन् श्रीनाथमुनिः



हस्तिगिरि-श्रीवरदराजमन्दिर-गोपुरम्




सालकूपः (यत्समीपं किरातदम्पतीभ्यां श्रीरामानुजः प्रापितः)

**अहमेव परं ब्रह्म जगत्कारणकारणम् ।**
**क्षेत्रज्ञेश्वरयोर्भेदः सिद्ध एव महामते ॥**
**मोक्षोपायो न्यास एव जनानां मुक्तिमिच्छताम् ।**
**मद्भक्तानां जनानां च नान्तिमस्मृतिरिष्यते ॥**
**देहावसाने भक्तानां ददामि परमं पदम् ।**
**पूर्णाचार्यं महात्मानं समाश्रय गुणाश्रयम् ॥**
**इति रामानुजार्याय मयोक्तं वद सत्वरम् ।**

चिरात् एते प्रश्नाः श्रीरामानुजं तुदन्ति स्म । साक्षात् देवदेवस्य श्रीवरदस्य मुखात् निःसृतं वचनामृतमिदं तं मुदान्वितमकरोत् । श्रीवरदायलयस्य दिशि श्रीकाञ्चीपूर्णस्य चरणयोः च दण्डवत् निपत्य मुहुर्मुहुः साष्टाङ्गनमस्कारान् च विधाय सः स्वकृतज्ञतां प्राकटयत् । अस्याः घटनायाः समनन्तरं सः श्रीकाञ्चीपूर्णेन अनुज्ञातः सन् श्रीरङ्गं प्रति प्रातिष्ठत । तत्र *पञ्चसंस्कार*-[1]विध्यर्थं श्रीयामुनमुनेः शिष्यप्रवरं श्रीमहापूर्णं समाश्रयितुम् ऐच्छत् ।

### ५.२. पञ्चसंस्कारविधिः

प्रायः तस्मिन्नेव काले श्रीरङ्गस्थाः वैष्णवाः श्रीयामुनाचार्यस्य उत्तराधिकारी अविलम्बेन प्रतिष्ठापनीयः इति समीहया महापूर्णस्वामिनम् अनुरुन्धन्ति स्म । तत्पदम् अलङ्कर्तुं रामानुजमेव युक्ततमं मत्वा श्रीमहापूर्णः तान् वैष्णवान् प्रतिज्ञाय काञ्चीयात्रायै सपत्नीकः उपक्रान्तः । भाग्यवशात् मार्गमध्ये 'मधुरान्तक'ग्रामे श्रीरङ्गं गच्छता श्रीरामानुजेन तस्य मेलनम् अभवत् । 'काञ्च्यां श्रीवरदसन्निधौ तव पञ्चसंस्कारविधिः सम्पद्यताम्' इति श्रीमहापूर्णेन कथिते सति श्रीरामानुजस्तु 'स्वामिन् !

**स्वपन्तं वापि भुञ्जानं गच्छन्तमपि वर्त्मनि ।**
**युवानमपि बालं वा स्ववशे करुते विधिः ॥**

अतः क्षणकालस्य विलम्बमपि न सहे । अस्मिन् क्षणे एव भवतः चरणयुगलच्छायां श्रयामि । अनुगृह्णातु माम्' इति अयाचत ।

---

[1]यज्ञः अङ्कनम् ऊर्ध्वपुण्ड्रं मन्त्रः दास्यनाम च इत्येते श्रीवैष्णवसम्प्रदाये पञ्च संस्काराः उच्यन्ते ।

आचार्योऽपि सम्प्रदायनिमित्तम् उद्यमकरणे समुत्सुकः तं तस्याम् आषाढपञ्चमीतिथौ मधुरान्तकस्थे *श्रीराममन्दिरे*[1] एव वकुलवृक्षस्य अधः पञ्चसंस्कारोपेतम् अकरोत्। ततः शिष्यः महापूर्णाचार्यः आचार्यपत्नी च काञ्चीं प्राप्नुवन्।

**५.३. गृहस्थाश्रमपरित्यागः**

काञ्च्यां श्रीरामानुजः स्वगृहार्धभागे महापूर्णाचार्यकुटुम्बस्य वसतिमकल्पयत् । तदारभ्य श्रीरामानुजः प्रत्यहम् आचार्याश्रये द्राविडप्रबन्धान् अधीते स्म । इत्थं षण्मासकालः अतीतः । अथ कदाचित् रक्षकाम्बा आचार्यपत्नीम् अभर्त्सयत् । पत्नीमुखेन प्रवृत्तं श्रुत्वा आयत्यामपि एवं विधं किञ्चन विप्रियत्वं सम्भाव्य श्रीमहापूर्णः अनुक्षणं पत्न्या साकं श्रीरङ्गाय प्रातिष्ठत। गुरोः अकस्मात् निर्गमनस्य कारणं ज्ञात्वा श्रीरामानुजः पत्नीं भृशम् अतर्जयत्।

पुनरपि कदाचित् पत्न्याः अनुचितव्यवहारात् श्रीरामानुजः परं निर्वेदम् अन्वभवत्। यदा सः देवालये भगवत्सेवायां व्यापृतः तदा कश्चन क्षुधार्तः यात्रिकः भिक्षामयाचत । कृपालुः सः तं यात्रिकं 'मदीयं गेहं समीपे वर्तते । तत्र गच्छतु भवान् । मम सहधर्मचारिणी भवन्तम् भोजयति ।' इति समाश्वासयत् । तत्र रक्षकाम्बा तु पूर्वतनाद् वाक्कलहात् कोपाक्रान्ता सती अस्मै यात्रिकाय भोजनम् अप्रदाय द्वारादेव एनं निरवर्तयत्।

ततः देवालयम् उपगतः यात्रिकः श्रीरामानुजेन अनुयुक्तः अवदत् - 'तव गृहे अलब्धभोजनोऽहम् अधुनापि बुभुक्षितोऽस्मि' इति । पत्न्याः अनेन व्यवहारेण श्रीरामानुजः क्रुद्धः सञ्जातः। तथापि अविह्वलः सन् सः तस्मै यात्रिकाय देवालये एव प्रसादं वितीर्य गृहाभिमुखम् अत्वरत । 'धिग् लघुचेतस्त्वं तव ! सर्वथा अनुचितस्तव व्यवहारः।' इति भार्यायै कुप्यन् 'अहो बत ! गर्ह्यं जीवनमीदृशम्' इति अनुशोचन् च पुनरपि श्रीवरदालयम् अगच्छत् । स्वधर्मानुष्ठाने स्वीयां कौटुम्बिकदशाम् अननुकूलां मत्वा सः अचिरादेव गार्हस्थजीवनस्य संन्यसनं प्रति सङ्कल्पम् अकरोत्।

---

[1] **मधुरान्तकम्** - श्रीकोदण्डराम-मन्दिरमिदं ब्रिटिश्-शासनकालात् परं सरोवर-रक्षक-राम-मन्दिरम् इति विश्रुतम्। उपमन्दिरं श्री-अहोबिलमठ-संस्कृतपाठशाला वर्तते।

तत्र आदौ अनन्तसरसि स्नात्वा ततः भगवत्सन्निधौ - 'श्रीवरद ! अकिञ्चनोऽयं तवानुचरः ! अनन्यगतिर्हि त्वम् ! त्वत्पादपद्मे न्यस्तभरं मां तव नित्यकिङ्करं कुरु!' इति प्रार्थयमानः बाष्पाकुललोचनः अतिष्ठत्।

भगवत्सेवायाम् अविच्छिन्नता वैराग्यशीलत्वं च इत्येतद्द्वयं श्रीवैष्णवमतस्य आधारभूतं लक्षणं भवति। अनयोः आचारे स्थापनार्थं तदानीं तत्समुदायस्य पुरः निदर्शनभूतः कश्चिद् अपेक्षितः आसीत्। सर्वथा तत्स्थानभाक् श्रीरामानुजः प्रायः स्वस्य त्रिंशत्तमे वयसि संन्यासाश्रमं प्राविशत्।

काञ्चीनाथस्य श्रीवरदराजस्य कृपया त्यक्तपरिग्रहः श्रीरामानुजः काषायवासोपेतः *त्रिदण्डधारी*[1] च अभवत्। ततः आरभ्य सः रामानुजमुनिः यतिराजः चेति नामभ्यां सम्बोध्यते स्म भक्तैः।

### ५.४.संन्यस्तजीवनस्य आरम्भकालः

अथ संन्यासी श्रीरामानुजमुनिः महता उत्साहेन सम्प्रदायवर्धककर्मसु निरतः अभवत्। सामान्यजनानां अद्वैतसिद्धान्तः दुर्बोध्यः इति तस्य दृढं मतम्। जनाः इष्टदेवम् उपासितुम् इच्छन्ति न तु उदासीनं सुदुरासदं कञ्चन देवम्। श्रीमहाविष्णुः परः देवः। सर्वशक्तः भक्तवत्सलः आपद्बन्धुः सः देवः सर्वभूतानां हिताय मृगरूपं नररूपं नरमृगरूपं वा गृहीत्वा पौनःपुन्येन अवतरति। इत्थं श्रीमन्नारयणस्य विश्वबन्धुत्वादीन् कल्याणगुणान् उत्साहेन जनानां मध्ये उपन्यसन् सः तेषु सुप्तं भक्तिभावम् उज्जागरयति स्म। स्नेहस्वरूपा लक्ष्मीश्च कृपासिन्धुः नारायणश्च समग्रस्य चराचरस्य लोकस्य पितरौ इति प्रतिपादयतः तस्य मधुरवाणी उत्कण्ठितानां श्रोतॄणां मनांसि आह्लादयत्।

### ५.५. काञ्च्याम् आद्याः शिष्याः

श्रीरामानुजमुनेः आद्यः शिष्यः दाशरथिः (मुदलियाण्डान्)। कृतवेदवेदान्ताध्ययनः अयं तस्य भागिनेयः। काञ्च्याः निकटे 'कूरम्' इति ग्रामः वर्तते। तद्ग्रामस्थः

---

[1] वाग्दण्डोथ मनोदण्डः कायदण्डस्तथैव च।
यस्यैते निहिता बुद्धौ त्रिदण्डीति स उच्यते॥ मनुस्मृतिः १२/१०
चित् अचित् ईश्वरः इति तत्त्वत्रयस्य निबोधकम् अपि भवति त्रिदण्डम्।

संस्कारसम्पन्नः धनाढ्यः हारीतकुलप्रभवः कूरेशनामकः द्वितीयः शिष्यः। यस्य गुरुकुले षोडशवर्षीयः श्रीरामानुजः अन्तेवासी आसीत् सः श्रीयादवप्रकाशः स्वयं रामानुजाचार्यं समाश्रयत् । तस्य शिष्यत्वं लब्ध्वा सः आत्मानं धन्यम् अमन्यत । ततः 'गोविन्दयोगि'नाम्ना आख्यातः सः श्रीरामानुजमुनेः आज्ञया 'यतिधर्मसमुच्चय'नामानं ग्रन्थमरचयत् । अस्मिन् प्रबन्धे श्रीवैष्णवमतानुगः यतिः कथं वर्तेत इत्यस्य विशदनिर्देशः उपलभ्यते ।

ततः अन्ये जैनाः बौद्धाश्चापि तस्य शिष्याः अजायन्त ।

*********

# ६. यतिराजः श्रीरङ्गे

भूतपुर्यां काञ्च्यां च निवसतः रामानुजमुनेः ३२ वर्षात्मकः कालावधिः व्यतीतः। कतिपयमासेषु गतेषु श्रीरङ्गभक्तवृन्देन सः आमन्त्रितः। सोऽपि तेषां प्रार्थनाम् अङ्गीकृत्य वरदराजदेवस्य अनुग्रहं च महनीयस्य श्रीकाञ्चीपूर्णस्य अनुमतिं च प्राप्य काञ्चीतः प्रातिष्ठत । प्रायः क्रि.श. १०५०तः सः श्रीरङ्गवासी जातः । दाशरथिकूरेशौ तमनुगतौ ।

श्रीरङ्गे शिष्यान् अध्यापयन् सः स्वयम् आचार्याणां सकाशात् निरन्तरम् अधीते स्म ।

## ६.१. श्रीमहापूर्णः

श्रीरामानुजमुनिः महात्मनः श्रीमहापूर्णात् न्यासतत्त्व-गीतार्थसङ्ग्रह-सिद्धित्रय-ब्रह्मसूत्र-पाञ्चरात्रागमादीनाम् अध्ययनम् अकरोत् ।

**शरीरं वसु विज्ञानं वासः कर्मगुणानसून् ।**
**गुर्वर्थं धारयेद्यस्तु स शिष्यो नेतरः स्मृतः ॥** *प्रपन्नामृतम् - २७.४०*

अस्मिन् श्लोके यत् शिष्यलक्षणम् उक्तं तत् स्वव्यवहारेण प्रमाणयति स्म श्रीरामानुजः । महापूर्णाचार्यस्तु तस्य सच्छिष्यत्वेन महाप्राज्ञत्वेन अत्यन्तं सन्तुष्टः सन् स्वपुत्रं पुण्डरीकं तम् आश्रयितुं प्रैरयत् ।

## ६.२. श्रीगोष्ठीपूर्णः

कदाचित् श्रीमहापूर्णः तम् अब्रवीत् - 'वत्स ! इतः अनतिदूरे गोष्ठीपुरनामकं समृद्धं नगरं वर्तते । तत्र निवसति श्रीयामुनमुनेः शिष्योत्तमः श्रीगोष्ठीपूर्णः । तत्त्वदर्शिनाम् अग्रगण्यं तमुपेत्य *रहस्यत्रयसारम्*[1] अन्विच्छ' इति ।

महापूर्णाचार्यस्य आज्ञां शिरोधार्यं मत्वा सपदि एव श्रीरामानुजमुनिः गोष्ठीपुरं प्रति प्रातिष्ठत । तत्र सः गोष्ठीपूर्णवर्यस्य चरणयोः नमस्कृत्य आत्मनः जिज्ञासां न्यवेदयत् । श्रीगोष्ठीपूर्णस्तु 'पश्चाद् आयाहि ! पश्यामस्तावत् !' इत्यवदत् ।' श्रीरङ्गं प्रत्यागतः श्रीरामानुजः पुनरपि श्रीगोष्ठीपूर्णं द्रष्टुम् अगच्छत् । द्वितीयवारमपि

---

[1] मूलमन्त्रः, द्वयं, चरमश्लोकः (सर्वधर्मान् परित्यज्य...- श्रीमद्भगवद्गीता १८/६६) च श्रीवैष्णवसम्प्रदाये रहस्यत्रयम् उच्यते ।

उपदेशः न लब्धः । इत्थं श्रीगोष्ठीपूर्णेन अष्टादशस्वपि पर्यायेषु तस्य याञ्चा निराकृता । किन्तु प्रतिपर्यायमपि आचार्यः श्रीगोष्ठीपूर्णः कञ्चन अमूल्योपदेशं तस्मै प्रायच्छत् ।

अवश्यं मयि कल्मषः कश्चन विद्यते येन आचार्यश्रेष्ठः मां रहस्यत्रयं नोपदिशति इति सन्तापम् अन्वभवत् श्रीरामानुजमुनिः । अग्रिमे पर्याये भूयोऽपि सः शुश्रूषया गुरुम् उपागच्छत् । अन्ततः शिष्यस्य अभिनिवेशेन तितिक्षया च द्रुतहृदयः गुरुः तं रहस्यत्रयमन्त्रसारं न्यबोधयत् । सत्पात्राय तुभ्यं दत्तः अयं मोक्षदायी मन्त्रः न देयः कस्मैचित् इत्यपि तम् अवदत् ।

आत्मानं धन्यं मत्वा सः आचार्यगोष्ठीपूर्णचरणयोः असकृत् नमस्कारार्पणम् अकरोत् । चिरकाङ्क्षितं ज्ञानं लब्धवतः तस्य मुखं दिव्यकान्त्या अशोभत । अपूर्वां काञ्चित् शान्तिम् अन्वभवत् सः । गुरुसकाशाद् विनिर्गत्य मार्गे गच्छन् सः गोष्ठीपुरे स्थितस्य श्रीसौम्यनारायनणमन्दिरस्य द्वारप्रदेशं प्राप्नोत् ।

समाजे अज्ञानवशात् दुःखवितप्तेषु सदा अनुकम्पायितः श्रीरामानुजमुनिः सहसा तत्र विद्यमानान् आहूय अवदत् 'भोः! अमूल्यं किञ्चित् रत्नं भवद्भ्यः दातुमिच्छामि! आगच्छन्तु! आगच्छन्तु' इति । शीघ्रमेव कश्चन भक्तसमूहः तत्र उपस्थितः । मन्दिरस्य विमानम् आरुह्य सः उच्चैः - 'आत्मीयाः ! श्रूयतां तावत् ! अनूच्चार्यताम् इदं भवरोगनाशकं मुक्तिप्रदायकं परमपवित्रं नाम श्रीमन्नारायणस्य' इति उद्घोषमकरोत् । तदनु तान् मन्त्रार्थान् अबोधयच्च । ते भक्ताः आनन्दसागरे आप्लाविताः अभवन् ।

श्रीरामानुजस्य इदं कृत्यं विदित्वा कुपितः गोष्ठीपूर्णाचार्यः तम् अपृच्छत् - 'अकार्यं कृतं त्वयाद्य ! गुरुवचनावज्ञारूपम् ईदृशम् अनर्थं विहितवतः तव नरकप्राप्तिः भविष्यतीति जानासि किल? अमूल्यं धनम् अपात्रे त्वयि निक्षिप्य पापमेव आचिरतं मया' इति ।

तदा अलुप्तधैर्यः श्रीरामानुजः सविनयम् अवदत् - 'भगवन् ! भवता अनुशिष्टः अहं भवतः आशिषः एव तेभ्यः भक्तेभ्यः वितीर्णवान् । अपि च तुच्छस्य ममैकस्य नरकप्राप्त्या यदि अनेकेषां वैकुण्ठप्राप्तिः सिद्ध्येत् तर्हि प्रकामम् अस्तु मम तादृशः नरकवासः ।

शुद्धमतेः शिष्यस्य परसमृद्धिकाङ्क्षित्वम् औदार्यं च विज्ञाय श्रीगोष्ठीपूर्णः अपगतकोपः सन् तम् आलिङ्ग्य गद्गदस्वरेण 'मन्नाथ' (एम्पेरुमानार्) इति समबोधयत्।

गोष्ठीपूर्णाचार्यपुत्रः सौम्यनारायणः अग्रे श्रीरामानुजमुनेः शिष्यः जातः।

### ६.३. श्रीमालाधरः

श्रीयामुनमुनेः शिष्येषु अन्यतमः श्रीमालाधरः। अस्मात् विदुषः 'शठारिकृतायाः सहस्रगीतेः व्याख्यानं शृणु' इति गुरुणा श्रीमहापूर्णेन निर्दिष्टः श्रीरामानुजः। पूर्वं स्वयं श्रीमहापूर्णः तं व्याख्यानमिदम् अश्रावयत्। तथापि 'बहु श्रोतव्यं बहुभ्यः श्रोतव्यम्' इति सूक्तिं स्मरन् गुरोः वचनानुगः सः अस्य 'नम्माळ्वार्-तिरुवाय्-मोळि'नामकस्य शठारिसूक्तेः व्याख्यानं श्रीमालाधारात् पुनरप्यशृणोत्। ११०२पद्यात्मकं सूक्तिरत्नमिदं ४०००पद्यात्मके दिव्यप्रबन्धहारे मध्यमणिः इव शोभते।

श्रीरामानुजकालपर्यन्तं द्राविडसंहितायाः लिपिबद्धः व्याख्यानग्रन्थः नासीत्। तस्य आज्ञया 'पिल्लान्'नामकः शिष्यः शठारिसूक्तेः व्याख्यानग्रन्थं व्यरचयत्। अनेन कृत्येन यामुनमुनेः द्वितीयः मनोरथः सफलः जातः। ६००० वाक्यैः निबद्धम् इदं व्याख्यानं विष्णुपुराणस्य शैलीम् अनुहरति। 'भगवद्विषयः' इति नाम्नापि इदं विश्रुतमस्ति। तदा सुधीः अयं शिष्य '*श्रीकुरुगेशः*'[1] इति कृतनामा अभवत् स्वाचार्येण।

मालाधराचार्यस्य पुत्रः सुन्दरबाहुः श्रीरामानुजमुनेः शिष्यः अजायत।

### ६.४. गायकेन्द्रः श्रीवररङ्गः

श्रीयामुनाचार्यस्य पुत्रः शिष्यश्च श्रीवररङ्गः श्रीरङ्गमन्दिरे *अरैयर्-सेवा*[2] करोति स्म। 'अस्माद् आचार्यात् दिव्यप्रबन्धस्य शठारिसहस्रगीतितः इतरेषां (३०००)

---

[1] **श्रीकुरुकापुरी/ तिरुक्कुरुगूर्** – कुरुकापुर्यां जातः शठारिः कुरुगेशः। तस्य कृतेः उत्कृष्टव्याख्यानकर्ता अयं शिष्यः (पिल्लान्) तन्नाम अलभत।

[2] **अरैयर्-सेवा** - द्राविडसंहितायाः (दिव्यप्रबन्धस्य) देवालयेषु गानम् 'अरैयर्-सेवा' इत्युच्यते। आचार्यश्रेष्ठः श्रीनाथमुनिः आळ्वार्-सूक्तीनां गेयतां कल्पयित्वा परम्पराम् इमां प्रावर्तयत्। श्रीरङ्गमन्दिरे इतरप्रमुखदेवालयेषु च इयं सेवा परम्परया अनुष्ठीयते। अत्र वैशिष्ट्यं

पद्यानां व्याख्यानं शृणु सम्प्रदायसारं च जिज्ञासस्व' इति श्रीमहापूर्णस्य अनुज्ञा आसीत्।

श्रीवररङ्गात् दिव्यप्रबन्धव्याख्यानम् अगृह्णात् सः । इत्थं श्रीनाथमुनिकालाद् आरभ्य श्रवणपरम्परया आगतस्य द्राविडसंहिताव्याख्यानस्य श्रवणं समग्रतया अकरोत् श्रीरामानुजमुनिः।

'गुरुशुश्रूषया विद्या' इति शास्त्रवचनात् षण्मासकालं यावत् श्रीरामानुजमुनिः आचार्यस्य वररङ्गस्य पादसंवाहनादिसेवाम् अकरोत्। शिष्यस्य सेवया प्रसन्नः श्रीवररङ्गः तस्मै 'आचार्यनिष्ठा' इति सम्प्रदायस्य सारभूतं चरमोपायं च न्यबोधयत्।

गुरुरेव परं ब्रह्म गुरुरेव परं धनम्।
गुरुरेव परः कामो गुरुरेव परायणम्॥
गुरुरेव परा विद्या गुरुरेव परा गतिः।
यस्मात् त्वदुपदेष्टासौ तस्माद्गुरुतरो गुरुः॥
उपायश्चाप्युपेयश्च गुरुरेवेति भावय। रहस्यत्रयसारः - २८ अध्यायः

## ६.५. श्रीशैलपूर्णः

श्रीशैलपूर्णः श्रीरामानुजगोविन्दयोः मातुलः श्रीयामुनाचार्यस्य शिष्यश्च । अयम् आचार्यः तदात्वे भीषणवनावृते श्रीशैले श्रीवेङ्कटाचलपतिं सेवमानः आसीत्।

एकदा श्रीरङ्गमठे रामानुजमुनिः शिष्यान् शठारिकृतां सहस्रगीतिं व्याख्याति स्म। पूर्वं महापूर्णमालाधरस्वामिनोः सकाशात् अस्याः व्याख्यानम् सः अध्यगच्छत्। प्रबन्धेऽस्मिन् श्रीवेङ्कटशैलस्य (तिरुपतिक्षेत्रस्य) महिमवर्णनम् अस्ति । व्याख्यानस्य समाप्तौ श्रीरामानुजाचार्यः शिष्यान् 'युष्मासु कः श्रीवेङ्कटशैलं गन्तुं सज्जः? वेङ्केटेशसन्निधौ पुष्पकैङ्कर्यपरेण भाव्यं तेन। अपि च देहावसानपर्यन्तं तत्रैव निवसनीयम्।' इत्यपृच्छत्। घोरमृगसङ्कुलं सान्द्रं निर्जनं भयावहं तद् वेङ्कटाद्रिवनम् इति जानन्नपि शिष्यः अनन्तः आह 'भगवन्! भवता अनुमतः चेत् अहं गमिष्यामि तत्र।' सन्तुष्टः आचार्यः 'वत्स! पुण्यशाली त्वम् अद्य

---

नाम एकः एव पुरुषः तानि (४०००) पद्यानि गायन् ताल-लय-नटनाभिनयद्वारा तेषां व्याख्यानमपि प्रस्तौति।

त्वदीयस्य कुलस्य एव समुद्धर्ता सञ्जातः असि । त्वादृशं शिष्यं लब्ध्वा धन्योऽहम्' इति आशीर्वचनानि न्यगदत् ।

गुरुं नत्वा अनन्तः श्रीशैलं प्रति प्रस्थितः । परमात्मनि अनुरक्तस्य संसारात् विरक्तस्य तस्य शेषजीवितं तत्रैव व्यतीतम् । श्रद्धालवः अद्यापि *अनन्ताचार्यः / अनन्ताळ्वान्*[1] इति नाम्ना तम् आद्रियन्ते ।

कदाचित् श्रीरामानुजमुनिः शिष्यैः सह श्रीशैलयात्राम् अकरोत् । तस्य शैलस्य तलभागे वसन् सः श्रीशैलपूर्णाचार्यात् श्रीमद्वाल्मीकिरामायणश्लोकानां गूढार्थम् अध्यगच्छत् । अध्ययनम् इदं तत्र कस्यचित् तिन्त्रिणीतरोः अधः संवत्सरकालं यावत् प्रवृत्तम् । तिरुपतौ 'अडिपुळि'नामकं तत्स्थलम् अद्यत्वे '*अलिपिरि*'[2] इति प्रसिद्धम् । तस्मिन् प्रवासकाले श्रीरामानुजमुनिरपि शिष्यान् उपनिषदाम् अर्थं प्राबोधयत् ।

अस्मिन्नन्तरे श्रीकालहस्तिक्षेत्रे परमशिवस्य उपासने निरतः गोविन्दभट्टः परमशिवस्य एव लीलया श्रीवेङ्कटेशस्य कृपया च आचार्यं श्रीशैलपूर्णं समाश्रयत् । श्रीरामानुजस्य निकटबन्धुः अयम् अध्ययनकाले श्रीयादवप्रकाशगुरुकुले तस्य सहपाठी आसीत् ।

गोविन्दभट्टः परमकारुणिकः । कदाचित् श्रीशैलस्थोपवने कस्यचित् सर्पस्य मुखे अङ्गुलीं निवेशयन्तं गोविन्दम् अपश्यत् रामानुजमुनिः । रक्तमयं जातं तत्सर्पमुखम् । अनन्तरं सः गोविन्दं तत्कारणम् अपृच्छत् । गोविन्दः - 'सः सर्पः वेदनाग्रस्तः आसीत् । कण्टकविद्धं तन्मुखम् । तद् अपकृष्य तं सर्पं वेदनातः मोचयितुं तथा कृतवान् अहम्' इत्युक्तवान् । अहो जीवकारुण्यमस्य इति चिन्तयतः श्रीरामानुजाचार्यस्य तस्मिन् स्नेहादरभावः समेधितः। सोऽयं गोविन्दः ततः परं श्रीरामानुजशिष्यः भूत्वा संन्यासाश्रमम् अभजत । रामानुजाचार्येण 'एम्बार्' (मन्नाथः) इत्यभिहितः सः सम्प्रदायसंरक्षणकर्माणि कुर्वन् तल्लीनः अभवत् ।

*********

---

[1] अनन्ताचार्येण तिरुपतौ निर्मिते उपवनपुष्करिण्यौ स्तः । अनेन उपवन-कार्यार्थम् उपयुक्तः लोहदण्डः देवालय-प्रवेशद्वारसमीपे भित्तौ द्रष्टुं शक्यः।

[2] 'अलिपिरि' - श्रीवेङ्कटशैलारोहणस्य आरम्भस्थलम् इदम् ।

# ७. सम्प्रदायविवर्धनम्

श्रीयामुनाचार्यस्य *शिष्यप्रवरेभ्यः*[1] उपदेशान् प्राप्नुवन् शिष्यांश्च शिक्षयन् श्रीरङ्गभूमौ इतरप्रदेशेषु च सम्प्रदायकर्माणि भूयसा व्यस्तारयत् यतिराजः ।

## ७.१. महात्मा कूरेशः

यतिराजस्य आद्यशिष्येषु अन्यतमः कूरेशः । श्रीवत्सचिह्नमिश्रः इति अपरं नामधेयं तस्य । आभिजात्यमदं विद्यामदं धनमदम् इति त्रिविधमदविवर्जितः सः । प्राज्ञस्य तस्य ग्रहणधारणशक्तिः असामान्या । यद्यपि सर्वेऽपि श्रीरामानुजशिष्याः आदर्शभूताः आसन् तथापि श्रीकूरेशः शिष्यवरेण्यः इति कथनम् अतिशयोक्तिर्न भवति । सः स्वकीयां सम्पदम् अशेषतः त्यक्त्वा श्रीरङ्गे सपत्नीकः निवसन् तापसवृत्तिम् अन्वचरत् । तस्य सहधर्मचारिणी आण्डाळ् अपि सर्वथा पत्युः अनुरूपा । अनयोः दम्पत्योः पुत्रौ अजायेताम् । यतिराजः तयोः नामकरणं पराशरः व्यासः च इति अकरोत् । अनेन पराशरव्यासमहर्ष्योः कृतज्ञासमर्पणरूपः यामुनमुनेः तृतीयः मनोरथः पूर्णः अभवत् ।

पराशरव्यासभट्टसोदरौ उभावपि श्रुतीनां द्राविडसंहितानां च अध्यापनम् अकुरुताम् । अनयोः ज्यायान् मेधावी पराशरभट्टः भगवद्गुणदर्पणाख्यं श्रीविष्णुसहस्रनामभाष्यं इतराः पञ्च कृतीः च अरचयत् । अयं श्रीरङ्गेशपुरोहितः इति विश्रुतः ।

कूरेशः श्रीभाष्यादिरचने गुरोः साहाय्यम् आचरितवान् । तदतिरिच्य स 'पञ्चस्तवं' (अतिमानुषस्तवः श्रीस्तवः वरदराजस्तवः वैकुण्ठस्तवः सुन्दरबाहुस्तवः) व्यरचयत् ।

वैष्णवसम्प्रदायस्य कृते कूरेशस्य उपकृतिः अतुल्या एव वर्तते । एकदा *कुलोत्तुङ्गचोळराजस्य*[2] अमर्षकृत्यात् स्वगुरुं रक्षितुं कूरेशः स्वयं रामानुजमुनिवेषं

---

[1] श्रीमहापूर्णः (पेरिय नम्बि), श्रीशैलपूर्णः (पेरिय तिरुमलै नम्बि), श्रीगोष्ठीपूर्णः (तिरुकोष्टियुर् नम्बि), श्रीमालाधरः (तिरुमालै आण्डान्), श्रीवररङ्गः (तिरु-अरङ्गप्पेरुमाळ् अरैयर्) च इति यामुनमुनेः पञ्चभ्यः शिष्येभ्यः श्रीरामानुजः उपदेशान् अलभत । अतः सः पञ्चाचार्यसमाश्रयः इति प्रकीर्त्यते ।

[2] ८. 'श्रीरङ्गतः कर्णाटकं प्रति' - भागः दृश्यताम् ।

धृत्वा महापूर्णाचार्येण सह वादार्थं तत्सभाम् अगच्छत् । तस्य नृपस्य दुराग्रहस्य परिणामतः तयोः नेत्रवेधनदण्डनं विहितम् । ततः प्रतिगच्छतोः तयोः मार्गमध्ये एव महापूर्णवर्यस्य प्राणवियोगः अभूत् । स्वदर्शनार्थं स्वदर्शनमेव दत्तवन्तौ तौ महात्मानौ ।

केभ्यश्चित् वर्षेभ्यः परं श्रीरामानुजमुनिः स्वयं कूरेशं काञ्चीवरदसन्निधिं प्रति अनयत् । दर्शनस्य पुनःप्रप्त्यै प्रार्थयितुं च आज्ञापयत् । तदा सः श्रीवरदराजस्तवेन भगवन्तम् अतोषयत् । ततः आदौ सः स्वस्य अपकर्तॄणां (खलभूतानां राज्ञः तत्सेवकानां च) कृते सद्गतिम् अयाचत । पश्चात् भूयोऽपि आचार्यस्य अनुरोधात् श्रीवरदं सम्प्रार्थ्य ज्ञानदृष्टिम् अलभत 'कूरत्ताळवान्'/ कूरेशः इति अस्य महाप्राज्ञस्य शिष्योत्तमस्य दिव्यं चरितम् ।

### ७.२. वादे यज्ञमूर्तेः पराजयः

श्रीरामानुजकाले दक्षिणभारते कश्चनः महापण्डितः वसति स्म । यज्ञमूर्तिर्नाम तस्य । मायावादी सः उत्तरभारतस्य केषुचित् नगरेषु काश्यां च वादेषु पण्डितान् अजयत् । तत्रैव भागीरथीनद्याः तीरे सः सन्न्यासं स्व्यकरोत् । काशीतः प्रत्यागतः सः रामानुजनामकः कश्चन वैष्णवसंन्यासी मायावादस्य खण्डनं करोति इति श्रुत्वा तेन सह वादं कर्तुं श्रीरङ्गम् अगच्छत् । स श्रीरामानुजम् अवदत् - 'वादार्थं भवन्तं समाह्वयामि । मत्पुरतः वादे भवता विशिष्टाद्वैतसिद्धान्तः प्रतिपादनीयः । यदि अहं पराजितः तर्हि भवतः दासत्वं मतं च अङ्गीकरिष्यामि ।' श्रीरामानुजः अपि तस्य समाह्वानम् अङ्ग्यकरोत् ।

षोडश दिवसान् यावत् तयोः मध्ये वादप्रतिवादः प्रावर्तत । मत्तगजौ इव विवदमानयोः तयोः अपि सः वादः कामपि निर्णयभूमिं प्रति नैव अभ्येति स्म । सप्तदशे दिने यज्ञमूर्तेः तर्काः प्रबलतराः आसन् । अग्रिमे दिने पुनः वादसभा अनुवर्तिष्यते इति स्थितौ अत्यन्तं परिखिन्नः श्रीरामानुजः मठं प्राप्य स्वाराध्यदेवं श्रीवरदराजं प्रार्थयत । तस्यां रात्रौ श्रीवरदराजः स्वप्नमुखेन 'श्रीयामुनाचार्यस्य सिद्धित्रयग्रन्थस्य आधारेण स्ववादम् उपन्यस' इति तम् आदिशत् ।

अष्टादशे दिवसे प्रातः नवोत्साहेन नवतेजसा च देदीप्यमानः सः वादसभां प्राप्नोत् । यज्ञमूर्तिस्तु तद्दिने वादम् अनारभ्य एव स्वपराजयं तच्छिष्यत्वं च अङ्ग्यकरोत् । किन्तु इत्थं वादस्य विच्छेदनम् अनुचितं मत्वा यतिराजस्तु स्वपक्षस्य तर्कान् सुष्ठु

उपन्यसितुम् आरभत । वादः अपि प्रवृत्तः । एकदण्डधारी संन्यासी यज्ञमूर्तिः ततः प्रभृति त्रिदण्डिसंन्यासी अभूत् । देवराजमुनिः इति लब्धनामा सः तमिळभाषया ज्ञानसारः प्रमेयसारः च इति ग्रन्थौ अरचयत् ।

### ७.३. उभयविभूतिनायकः

सम्प्रदायस्य नेतॄणां सामान्यजनानां च सङ्घटनं सम्पाद्य काञ्चित् सामाजिकीं क्रान्तिम् एव अघटयत् यतिराजः ।

ये वेदान्तस्य (गीता-ब्रह्मसूत्रोपनिषदादीनां) च द्राविडसंहितायाः (४०००पद्यात्मकदिव्यप्रबन्धस्य) च अध्ययनं कुर्वन्ति तदाधारेण सम्प्रदायस्य प्रचारं च कुर्वन्ति ते उभयवेदान्तिनः । सम्प्रदायस्य प्रवर्तनार्थं यतिराजेन द्विसप्ततिः प्रधानशिष्याः ('सिंहासनाधिपतयः') प्रतिष्ठापिताः । एवं तस्य अनुयायिषु सप्तत्यधिकशिष्याः शतशः गृहस्थाश्च आसन् श्रीरङ्गे । यतिराजः स्वयं ग्रन्थान् अरचयत् उभयवेदान्तिनां शिष्याणां द्वारा ग्रन्थान् अलेखयच्च ।

स श्रीरङ्गमन्दिरस्य आराधनपद्धतिं व्यवस्थपायत् । मन्दिरस्य निर्वाहे कांश्चन लोपान् परिलक्ष्य तान् पर्यहरत् । श्रीरङ्गमन्दिरस्य सुष्ठु निर्वाहार्थं विधानानि अकल्पयत् । मन्दिरे नित्याराधनाय उत्सवानाम् आचरणाय च कोषाधिकारि-लेखापालाः, अर्चकाः, वेदपठितारः, दिव्यप्रबन्धगायकाः, तीर्थकैङ्कर्यपराः, नैवेद्यसमर्पणाय पाचक-भाण्डागारनिर्वाहकाः, नन्दवनपालकाः, गोशाला-सेवकाः, मन्दिरानुरक्षणपराः च इति एतेषां दश गणानां समितिः परिकल्पिता । कृषिक-स्थपति-तन्तुवाय-सौचिक-मालाकार-आभरणकार-कुम्भकार-नाविक-रजक-चित्रकलाकार-कर्मकरादयः इति समाजस्य सर्ववर्गजनानाम् अपि मन्दिरसेवाकर्मसु प्रधानं स्थानम् अकल्पयत् यतिराजः ।

ईदृशानां कार्याणां निर्वाहे नैकदा तेन प्रबलविरोधः सम्मुखीकृतः । एकदा द्वेषभाववशङ्गतः कश्चन प्रधानार्चकः स्वपत्नीद्वारा यतिराजाय भिक्षायां विषमिश्रम् अन्नं दापयितुम् अयतत । सा गृहिणी तत्पापं कर्तुं न सज्जा । किन्तु पतिवचनम् उल्लङ्घितुम् अशक्ता सा (सगरं) तदन्नं यतिराजस्य काषायोत्तरीये संस्थाप्य बाष्पाकुलनयना भूमौ निपत्य तस्य पादनमस्कारम् अकरोत् ।

संन्यासिभिः स्वयं पक्वम् अन्नं न सेवनीयम् । कस्यापि गृहस्य पुरतः भिक्षायै केभ्यश्चिद् क्षणेभ्यः ऊर्ध्वं न स्थातव्यम् । मध्याह्नवेलायाम् उपनिषद्वाक्यानि उच्चैः

पठद्भिः तैः यदा गम्यते तदा गृहस्थैः तेषां काषायोत्तरीये अन्नं समर्प्यते । वस्त्रे बद्धं तदन्नं नद्याः प्रवाहे निमज्ज्य ततः शिष्टस्य अष्ट कवलाः एव तैः सेवनीयाः । अपि च भिक्षान्नम् आदाय वीथ्या गन्तृभ्यः संन्यासिभ्यः केनापि साष्टाङ्गप्रणामः न विधेयः । यदि केनापि तथा क्रियते तर्हि तद्दिने तेन संन्यासिना निराहारेण भवितव्यम् इति शास्त्रनियमः ।

तस्मिन् दिने एव न अपि तु ततः कतिपयदिनेभ्यः त्यक्ताहारः वर्तते रामानुजमुनिः इति विदित्वा श्रीगोष्ठीपूर्णाचार्यः तस्य नित्यभिक्षायै उपायान्तरं कञ्चित् व्यदधात् ।

किन्तु असामान्यम् इदं यत् ये पूर्वं श्रीरामानुजाय विद्विषन्ति स्म ते एव अग्रे हितात्मनः तस्य समर्थकाः अनुयायिनः च संवृत्ताः ।

कर्मसु कौशलं, शास्त्रेषु व्युत्पन्नता, वैराग्ये अप्रतिमत्वं, भक्त्याम् अचला निष्ठा, आर्तेषु अनुकम्पा च इत्यादीनां गुणानां विरलः समन्वयः तस्मिन् आसीत् । तेन प्रसन्नः श्रीरङ्गेशः '*उभयविभूतिनायकः*'[1] इति नाम्ना तम् अशंसत् ।

**यो नित्यमच्युतपदाम्बुजयुग्मरुक्म-**
**व्यामोहतस्तदितराणि तृणाय मेने**
**अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः**
**रामानुजस्य चरणौ शरणमहं प्रपद्ये ॥** श्रीकूरेशः

## ७.४. श्रीभाष्यरचनम्

कदाचित् श्रीरङ्गमठे शिष्याणां शिक्षणावसरे यामुनमुनेः माहात्म्यं श्रावयता यतिराजेन उक्तं - 'व्यासकृतब्रह्मसूत्राणां भाष्यं रचनीयम् इति मया प्रतिज्ञातम् आसीत् । अस्याः प्रतिज्ञायाः निर्वृत्तये यतनीयमधुना । परमाचार्यस्य श्रीयामुनमुनेः अभिलाषोऽयम् । महर्षिबोधायनस्य वृत्त्यनुसारं भवेदिदं भाष्यम् । अत्र दक्षिणदेशेषु क्वचिदपि नोपलभ्यते स वृत्तिग्रन्थः । परं श्रूयते यत् काश्मीरदेशे शारदापीठे यत्नतः परिरक्ष्यमाणः अस्ति सः ग्रन्थः । अद्यैव कूरेशेन सह काश्मीरं

---

[1] **उभयविभूतिनायकः** - वैकुण्ठलोकः अपुनरावर्ती अतः नित्यविभूतिः इति उच्यते, इह लोकः अनित्यः अतः लीलाविभूतिः इति उच्यते । उभयोरपि अनयोः विभूत्योः साम्राज्यप्रदानेन श्रीरङ्गेशः श्रीरामानुजम् उभयविभूतिनायकम् अकरोत् ।

... विचयस्य सफलतायै भगवन्तं प्रति प्रस्थितोऽस्मि । भोः भागवताः ! आवयोः विचयस्य सफलतायै भगवन्तं प्रार्थयध्वम् !'

अथ त्रयाणां मासानाम् अनन्तरं तौ शारदापीठं प्राप्नुताम् । तत्र प्रवृत्तासु शास्त्रचर्चासु यतिराजस्य अगाधज्ञानं वाक्प्रखरतां च समीक्ष्य विपश्चितः प्रभाविताः अभवन् । दक्षिणदेशात् आगतयोः अतिथ्योः सम्माननसत्कारादिकं कृतवन्तः पण्डिताः यदा बोधायनवृत्तिं प्रति अनुयुक्ताः तदा ते अवदन् - 'अत्रैव अस्याः पठनाय अनुमतिर्दीयते न तु इतः नयनाय' इति । अनेनैव सन्तुष्टौ गुरुशिष्यौ ग्रन्थस्य प्रतिकृतिं प्राप्य पठितुमारब्धवन्तौ ।

कतिचन दिनानि अतीतानि । अकस्मात् तेषां पण्डितानां सन्देशवाहकाः आगत्य तयोः सकाशात् तं ग्रन्थम् अपानयन् । अनेन भग्नाशं श्रीरामानुजं कूरेशः अब्रवीत् यत् 'चिन्ता न कार्या स्वामिन् ! यतो हि यस्मिन् दिवसे ग्रन्थः लब्धः तदारभ्य रात्रिषु जाग्रता मया समग्रा बोधायनवृत्तिः अधीता । कण्ठस्थां तां वृत्तिम् अद्यैव यदि लेखितुम् आरप्स्ये तर्हि पञ्चषदिनाभ्यन्तरे पूरयिष्यामि ।'

शिष्यवाचा अनया आचार्यस्य म्लानमुखं ज्योत्स्नया कुमुदपुष्पमिव विकसितम् । कूरेशं समालिङ्ग्य स सबाष्पं सगद्गदं तस्मै अकथयत् - 'महान्तं क्लेशम् अपनीय त्वं यम् उपकारं कृतवानसि कथंस्वित् तस्य निर्यातनं कुर्याम् ?' इति ।

ततः श्रीरङ्गं प्राप्य यतिराजः ब्रह्मसूत्राणां भाष्यरचनम् उपक्राम्यन् कूरेशम् आदिशत् - 'अस्य लेखनावसरे मया प्रतिपादितं कमपि अंशम् अनुपपन्नं मन्यसे चेत् तत्रैव विरम ! तदा पुनरवलोकनं करिष्ये' इति ।

यथोक्तं लिखन् शिष्यः एकत्र लेखनात् विरतः । जीवात्मनः स्वरूपनिरूपणम् इति सन्दर्भः । ज्ञातृत्वपरत्वम् आचार्यमतम् । शेषत्वपरत्वं शिष्यमतम् । आचार्येण असकृत् आदिष्टः अपि सः तद्वचनम् अपालयन् तूष्णीकः स्थितः । तदा कोपं प्रकटयन् आचार्योऽवदत् - 'त्वमेव भाष्यरचनं कुरुष्व' इति । अनन्तरं आचार्यः **"ममैवांशो जीवलोके जीवभूतः सनातनः** - (श्रीमद्भगवद्गीता १५.७)" इत्यादीनि शास्त्रवचनानि विमृश्य शिष्यमतम् अङ्गयकरोत् । ब्रह्मसूत्रभाष्यलेखनं सम्पाद्य यतिराजः यामुनाचार्यस्य प्रथमम् मनोरथं प्रापूरयत् । अपि च परमगुरोः यामुनमुनेः त्रीनपि मनोरथान् प्रपूर्य यतिराजः पूर्णप्रतिज्ञः कृतकृत्यश्च समजायत ।

बादरायणप्रणीतस्य चतुरध्यायात्मकस्य ब्रह्मसूत्रस्य अतिविस्तृतं वेदान्तप्रतिपाद्यम् इदं रामानुजीयभाष्यं लोकोत्तरेण परिगण्यते । अस्मिन् ग्रन्थे आचार्येण पूर्वपक्षमतनिरसनं स्वमतप्रतिपादनं च विशदतया क्रियते ।

**वन्दे वेदान्तकर्पूर-चामीकर-करण्डकम् ।**
**रामानुजमार्याणां चूडामणिमहर्निशम् ॥** श्रुतप्रकाशिकाचार्यः - श्रीसुदर्शनसूरिः

### ७.५. इतरकृतयः

श्रीभाष्यम् अन्तर्भाव्य श्रीरामानुजाचार्येण ९ ग्रन्थरत्नानि प्रणीतानि ।

**वेदान्तदीपः, वेदान्तसारः** - बादरायणरचित-वेदान्तसूत्राणां (ब्रह्मसूत्रस्य) परिचायकं संक्षिप्तव्याख्यानम् अनयोः ग्रन्थयोः विषयः ।

**गीताभाष्यम्** - यामुनाचार्यकृतस्य गीतार्थसङ्ग्रहस्य आधारेण श्रीमद्भगवद्गीतायाः विशिष्टाद्वैतसिद्धान्तपरं विस्तृतं व्याख्यानम् ।

**वेदार्थसङ्ग्रहः** - उपनिषदां सारभूतेऽस्मिन् ग्रन्थे, *तत्त्वं* (परमात्मस्वरूपं जीवात्मस्वरूपं च), *हितम्* (उपायः), *पुरुषार्थः* (परमप्रयोजनं) च इति त्रयः विषयाः निरूप्यन्ते ।[1] आचार्यः स्वग्रन्थे निवेदयति यत् वेदवेदान्तवाक्यानां भगवद्-बोधायन-टङ्क-द्रमिड-गुहदेव-कपर्दि-भारुचिप्रभृतीनां च यामुनाचार्यस्य च सुव्यक्तार्थम् आधारत्वेन परिगृह्य मया अत्र विषयनिरूपणं क्रियते इति ।

श्रीरामानुजकृतिषु श्रुत्युपनिषद्वचनव्याख्यानाय ब्रह्मसूत्राणि, श्रीमद्भगवद्गीता, पूर्वाचार्यव्याख्यानानि, आगमाश्च आधारग्रन्थाः, इतिहास-स्मृति-पुराण-द्राविडसंहितादयः आकरग्रन्थाश्च आसन् । अपि च तत्कृतीनां विशेषांशेषु सर्वश्रुतिमुख्यार्थत्वं सर्वश्रुतिसामञ्जस्यं चैतद्द्वयं सर्वप्रधानम् इति रामानुजदर्शनज्ञानाम् अवलोकनम् ।

**तस्मै रामानुजार्याय नमः परमयोगिने ।**
**यः श्रुतिस्मृतिसूत्राणाम् अन्तर्ज्वरमशीशमत् ॥** श्रुतप्रकाशिकाचार्यः - श्रीसुदर्शनसूरिः

**गद्यत्रयम्** - *शरणागति*गद्यं[2] श्रीरङ्गगद्यं वैकुण्ठगद्यं च ।

**नित्यग्रन्थः** - भगवदाराधन-पद्धति-प्रतिपादकः अयं ग्रन्थः ।

---

[1] तत्त्वहितपुरुषार्थाः

[2] शरणागतिः च - परिशिष्टभागः दृश्यताम् ।

आचार्यः श्रीवैकुण्ठगद्यारम्भे स्वप्राचार्यं यामुनमुनिं स्तौति -

**यामुनार्यसुधाम्बोधिमवगाह्य यथामति ।**
**आदाय भक्तियोगाख्यं रत्नं सन्दर्शयाम्यहम् ॥**

भगवतः अद्भुतस्वरूप-रूपादिवर्णनं, तस्य अनन्तकल्याणगुणगणस्तुतिः, श्रियः कृपावलम्बपूर्वम् आत्मसमर्पणं, कैङ्कर्यप्रार्थना, भगवल्लाभोत्कण्ठा इत्यादयः विषयाः गद्यत्रये प्रतिपादिताः । भक्तिरसस्निग्धा गद्यत्रयरूपा तदीया वचनपीयूषधारा नित्यम् अनुसन्धीयते प्रपन्नैः मुमुक्षुभिः ।

### ७.६. दिग्विजयः

यतिराजः शिष्यैः गृहस्थैः च साकं श्रीरङ्गतः दिग्जयाय प्रातिष्ठत । ते कुम्भकोणं, काञ्चीं, कुरुकापुरीं (नम्माळ्वार्-क्षेत्रं), वामनक्षेत्रं (तिरुक्कुरुङ्गुडि), तिरुवनन्तपुरं च अगच्छन् । ततः यात्राम् अनुवर्तयन्तः ते द्वारिकां, मथुरां, वृन्दावनं, सालग्रमं, साकेतम् (अयोध्यां), बदरीकाश्रमं, नैमिषारण्यं, पुष्करं च गत्वा शारदापीठं (काश्मीरं) प्राप्नुवन् । काश्मीरप्रदेशे यतिराजः पण्डितान् वादेषु अजयत् । तत्र भगवतः श्रीहयग्रीवस्य प्रत्यक्षदर्शनम् अवाप्नोत् स महामुनिः । गुरुपरम्परावैभवं कथयति यत् श्रीभाष्यरचनेन अत्यन्तं प्रसन्ना सती शारदादेवी श्रीरामानुजाचार्यं तत्कृतिं च भाष्यकारः श्रीभाष्यं चेति व्यपादिशत् ।काश्मीरतः ते काशीं गत्वा तदनन्तरम् उत्कले पुरीम् (श्रीजगन्नाथक्षेत्रम्) अगच्छन् । तत्र यतिराजेन संस्थापितः मठः (एम्बार्-मठः) अद्यापि विद्यते । ततः ते श्रीकूर्मम्, अहोबिलं, वेङ्कटाचलं च गत्वा काञ्चीपुरं प्राप्नुवन् । प्रायः सर्वेषु वैष्णवालयेषु *पाञ्चरात्रागम*[1]-विध्यनुसारिणीं पूजापद्धतिं प्रावर्तयत् श्रीरामानुजमुनिः । किन्तु तिरुवनन्तपुरस्थ-श्रीपद्मनाभमन्दिरस्य च पुरीजगन्नाथमन्दिरस्य च पुरोहिताः तदर्थम् असज्जाः आसन् । अतः तत्रत्या प्रद्धतिः एव अग्रेऽपि अन्ववर्तत ।

काञ्च्यां स्वाराध्यदेवं श्रीवरदं भक्त्या नत्वा सशिष्यः यतिराजः मधुरान्तकं (यत्र तस्य पञ्चसंस्कारविधिः सम्पन्नः), वीरनारायणपुरं (मुनयोः नाथयामुनयोः जन्मस्थलं) च गत्वा श्रीरङ्गधाम प्रत्यागच्छत् ।

*********

---

[1] वैष्णवालयेषु प्रायः पाञ्चरात्रागमपद्धतिः अथवा वैखानसागमपद्धतिः अनुस्रियते ।

# ८. श्रीरङ्गतः कर्णाटकं प्रति

यदा यतिराजः क्री.श. १०९०-९९ इत्यस्मिन् वर्षाणां दशके श्रीरङ्गे अवर्तत तदा कश्चन सङ्कटकालः सन्निहितः । कुलोत्तुङ्गचोळराजस्य शासनकालः प्रावर्तत तदा । काञ्ची तस्य राजधानी । प्रजाजनाः सर्वेऽपि शैवमतालम्बिनः भवेयुरिति तस्य निर्बन्धः । *अपायशङ्कया*[1] यतिराजेन तद्राज्यात् बहिः प्रवासः करणीयः इत्यापतितम् ।

## ८.१. विष्णुवर्धनः

यतिराजः तस्य शिष्याः गोविन्ददाशरथिप्रभृतयः च पश्चिमदिशा गच्छन्तः नीलगिरिवनप्रदेशं प्राप्नुवन् । पञ्चषेभ्यः दिनेभ्यः वनाद् वनं गच्छन्तः ते क्षीणबलाः सञ्जाताः । तत्र केचन चण्डालाः तेभ्यः प्रीत्या फलानि मधु च प्रायच्छन् । अथ पूर्वदिशा प्रयाणम् अनुवर्तयन्तः मैसूरुसमीपे सालग्रामे कञ्चन कालं यावत् ते न्यवसन् । तत्र आन्ध्रपूर्णनामा तपस्वी तेषाम् आतिथ्यम् अकरोत् । तदारभ्य अयम् आन्ध्रपूर्णः (वडुग-नम्बि) यतिराजसेवैकतत्परः जातः ।

आन्ध्रपूर्णेन सह ततः प्रस्थाय श्रीनृसिंहक्षेत्रे कञ्चित् कालं यावत् उषित्वा ते तोण्डनूरू प्राप्नुवन् । तत्र होय्सलराजः विठ्ठलदेवः (बिट्टिदेवः) शासकः। जैनमतावलम्बी स राजा राज्ञी शान्तलादेवी च । कदाचित् पुत्री अस्वस्थमनस्का इत्यतः तौ राजदम्पती चिन्ताक्रान्तौ । बहवः वैद्याः आनायिताः किन्तु चिकित्सा निष्फला । ततः श्रमणाः आहूताः । तेषाम् उच्चाटानादिः प्रयासः अपि असिद्धः । पूर्वं काञ्च्यां यथा *राजकुमारीं*[2] ब्रह्मरक्षःपीडनात् व्यमोचयत् तथा एनां राजकुमारीम् अपि मन्त्रोच्चारणपूर्वकं पवित्रजलप्रोक्षणेन स्वस्थचित्तां व्यदधात् श्रीरामानुजमुनिः ।

तस्मात् राज्ञः बहुमान्यः सञ्जातः यतिराजः । सः वैष्णवमतम् अधिकृत्य श्रोतुकामः सन् प्रणम्य तं प्रभाषितुं प्रार्थयत । स्फुटवक्तुः हितवादिनः यतिराजस्य प्रतर्कैः प्रभावितः राजा श्रमणान् चर्चार्थम् आह्वयत् । अन्येद्युः महत्यां सदसि उपसहस्रं

---

[1] ७.१ भागः - (महात्मा कूरेशः) दृश्यताम् । अन्यमतासहिष्णवः ईदृशनृपाः भारतदेशे विरलाः एव आसन् । यदा अस्य राज्ञः पुत्रः विक्रमचोळराजः शासनम् आरब्धवान् तदा सः यतिराजं श्रीरङ्गं प्रति पुनः आमन्त्रितवान् ।

[2] कुलोत्तुङ्गचोळराजस्य सोदरी सा ।

श्रमणाः उपस्थिताः। यतिराजेन पुरस्कृतानां वादानां विप्रतिषेधनं वा स्वपक्षनिरूपणं वा कर्तुम् अशक्ताः ते निरुत्तराः अभवन्। तदा विठ्ठलदेवराजः वैष्णवमतम् आश्रयत्। तत्सभायाम् उपस्थितेषु श्रमणेषु अधिकतराः यतिराजस्य मतं प्रशस्य राजानम् अन्वसरन्। यतिराजः विष्णुवर्धनः इति नाम प्रायच्छत् तस्मै राज्ञे। ततः परं होय्सलराजस्य विष्णुवर्धनस्य राज्याश्रये मैसूरुप्रदेशं परितः वैष्णवमतम् इतरहिन्दुमतानि च महता प्रमाणेन प्रसृतानि अभवन्।

एकदा भगवान् स्वप्नमुखेन तम् अवदत् - 'यादवाद्रौ (तिरुनारायणपुरे) मदीयः विग्रहः विचेतव्यः त्वया' इति।

## ८.२. यादवाद्रिपतिः

यतिराजः तच्छिष्याश्च यादवाद्रिक्षेत्रम् (प्रायः १०९८तमे संवत्सरे) आसीदन्। एकदा प्रभाते तत्र कस्मिंश्चित् तुलसीवने वल्मीकप्रच्छन्नः सुन्दरः विग्रहः दृष्टः यतिराजेन। तदा शिष्यान् तत्रत्यान् जनान् च उद्दिश्य सः ससन्तोषम् अवदत् - श्रीयादवाद्रिपतिः अयमेव। भोः भक्ताः! भगवतः नित्याराधनं कुर्याम अद्यारभ्य। यदि सर्वे मिलित्वा उद्यमभृतः भवेम तर्हि मन्दिरं निर्मास्याम अत्र।' शीघ्रमेव तत्र बृहत् सुन्दरं यादवाद्रिपति-मन्दिरं निर्मितम्। तत्पार्श्वे 'कल्याणी'पुष्करिणी वर्तते।

यादवाद्रिपतिः यतिराजस्य स्वप्ने भूयोऽपि आविर्भूय न्यगदत् - 'वत्स! तव सेवया प्रसन्नोऽहम्। परन्तु *उत्सवमूर्त्याम्*[1] अविद्यमानायां मन्दिरात् बहिः स्थितान् कटाक्षैः अनुगृह्य पापविमुक्तान् केन व्याजेन कुर्याम्? तस्मात् 'सम्पत्कुमारः (रामप्रियः)' इति अभिधानवन्तं मदीयम् अर्चारूपम् अत्र आनीयताम्। सम्प्रति सः विग्रहः *दिल्लीराजस्य (बाद्शाह्)*[2] सकाशे वर्तते' इति।

---

[1] दक्षिणभारते मन्दिरेषु सर्वस्य अपि देवस्य अचलसचलौ (मूलमूर्तिः, उत्सवमूर्तिः च) विग्रहौ भवतः। उत्सवदिवसेषु हंसगरुडादिवाहनारूढायाः देवतायाः उत्सवमूर्तिः मन्दिरात् बहिः वीथ्यां सञ्चार्यते। भक्ताः रङ्गवल्लीः विरचय्य धूपदीपपत्रपुष्पफलादीनि समर्प्य अर्चकमुखेन देवतां पूजयन्ति। अनेन रुग्णाः (मन्दिरं गन्तुम् अशक्ताः) वा पापभाजः वा अश्रद्धालवः वापि देवतायाः कृपाकटाक्षपात्राणि भवन्ति इति श्रद्धीयते।

[2] तस्य शासकस्य तत्स्थलस्य च विषये ऐतिहासिज्ञानाम् ऐकमत्यं नास्ति। कश्चित् मुगलसामन्तः उत सेनापतिः स्यात् अयम् इति ऊह्यते तैः।

अथ किम् ! यतिराजः कैश्चित् शिष्यैः सार्धं पद्भ्यां त्वरमाणः दिल्लीप्रदेशं प्राप्नोत्। सः शासकः आदरेण यतिराजं स्वागतीकृत्य तस्य आगमनस्य कारणं विज्ञाय तस्मै विविधालयेभ्यः अपनीतान् बहून् विग्रहान् प्रादर्शयत्। किन्तु तेषु एकोऽपि सम्पत्कुमारविग्रहः नासीत्। तदा सः शासकः स्वपुत्र्याः प्रियं विग्रहमेकम् अदर्शयत्। तं दिव्यमङ्गलविग्रहं सम्पत्कुमारम् अभिज्ञाय चिराय अदृष्टं पुत्रं प्रत्यक्षीकृतवान् पिता यथा नन्दति तथा सः प्रीत्या तम् आलिङ्ग्य 'सेल्वप्पिळ्ळै !' (सम्पत्कुमार) इति आकारयत्।[1] तस्मात् शासकात् विग्रहं प्राप्य ते दक्षिणदिशं प्रति प्राक्राम्यन्। कालातिपातः क्रियते चेत् तस्याः राजकुमार्याः अनुरोधात् शासकः तं विग्रहं प्रतिनेतुं भटान् प्रेषयेत् इति धिया ते अहोरात्रं तूर्णम् अगच्छन्।

बीबी लाचिमार्-नामिका सा राजकुमारी तं विग्रहं प्राणप्रियम् अमन्यत। कैश्चित् विप्रैः सः नीतः इति विदित्वा सा शोकाकुला अभवत्। सः शासकः अपि उन्मत्ताम् इव सञ्जातां पुत्रीं दृष्ट्वा चिन्ताग्रस्तः सन् भटान् आदिशत् - 'सपदि तान् अनुगत्य विग्रहम् अपकृष्य आनयत यूयम्' इति। एतच्छ्रुत्वा राजकुमारी रुदती अयाचत् - 'पितः! अहमपि तैः सह जिगमिषामि। अनुमतिः दीयताम्' इति। पित्रा अनुमता सा सेविकाभिः अनुचैरैः सैनिकैः च सह शिबिकारूढा प्रस्थिता।

यतिराजः शिष्याश्च यादवाद्रिम् आगत्य तं विग्रहं मन्दिरे रहसि प्रत्यस्थापयन्। आगमनमार्गे केचन चण्डालाः इतरराज्यसैनिकेभ्यः तेषां रक्षणे भूयसा साहाय्यं समाचरन्। यतिराजः तान् स्नेहेन 'तिरुक्कुलत्तार्' (धन्याः) इति समबोधयत्।

तत्र बीबी लाचिमार् हे नाथ ! हे स्वामिन् ! इत्येव विलपन्ती आराध्यमूर्तिं तमेव ध्यायन्ती आगता। एकस्यां रात्रौ सा एकाकिनी एव दक्षिणदिशा वनमार्गेण प्रक्रान्ता। कतिपयदिनेभ्यः परं सा यादवाद्रिं समागच्छत्। यथा चक्षुष्मती व्यक्तिः इतरसहायं विना सूर्यं द्रष्टुं शक्नोति तथा भक्त्या पूतदृष्टिः इयं साहाय्यान्तरं विनैव प्राप्यम् उपागता। यतिराजः अन्येः च तस्याः अलौकिकीं भक्तिं सन्दृश्य भृशं विस्मिताः। स्वस्वामिनः प्राणनाथस्य सन्निधौ निरतमनाः सा भक्ता अनिर्वचनीयम् आनन्दम् अन्वभवत्। उपरतस्पृहा सा केभ्यश्चिदेव दिनेभ्यः परं सरित् सिन्धुम् इव

---

[1] यदा यतिराजः 'रामप्रिय' इति तं प्रीत्या आकारयत् तदा मन्दहसिताननः सः विग्रहः स्वयं चलित्वा तम् उपागच्छत् इत्यतः भक्तैः भगवान् यतिराजसम्पत्कुमारः इति कीर्त्यते।

सर्वशरण्यस्य श्रीसम्पत्कुमारस्य कमलचरणौ अवाप्नोत् । अद्यावधि तस्याः विग्रहः ***यादवाद्रिपतिमन्दिरे***[1] दक्षिणभारते केषुचित् इतरमन्दिरेषु च पूज्यते ।

कर्णाटकप्रदेशे राजा, पण्डिताः, चार्वाकाः, तार्किकाः, श्रमणाः, बौद्धाः, सामान्यजनाः, वनवासिनः च इति विविधाः सहस्रशः जनाः रामानुजमुनेः सच्छीलेन अगाधभक्तिज्ञानवैराग्यैः सामाजिक-सत्कर्मभिः च प्रेरिताः प्रभाविताः च अभवन् । सः यादवाद्रौ द्विपञ्चाशतः वेदपण्डितानां गृहस्थानां वसतिम् उपकल्प्य यादवाद्रिपतिमन्दिरे नित्याराधनकैङ्कर्ये तान् न्ययोजयत् । सम्प्रदाये ज्ञानमण्डपः इति अभिधीयमाने अस्मिन् क्षेत्रे वेदवेदाङ्गाध्ययनकेन्द्रं, *प्राचीनग्रन्थानाम् अध्ययन-संशोधन-प्रकाशनानि*[2], वेदेषु उक्तानाम् ओषधिवनस्पतीनां वर्धनं चेति अनेकप्रकल्पाः प्रवर्त्यमानाः सन्ति । श्रीरामानुजाचार्यः मन्दिरस्य उत्सवकाले त्रिषु दिनेषु तिरुकुलत्तार् इति चण्डालानाम् आलयप्रवेशाय विधानं च अकल्पयत् । तोण्डनूर् मध्ये तेन निर्मापितः विशालसरोवरः (अनन्तरकाले मोतीतालाब्-नामकः) अद्यापि वर्तते । विष्णुवर्धनराजस्य शासनकाले कर्णाटकप्रदेशे पञ्च नारायणमन्दिराणि निर्मापितानि - श्रीकीर्तिनारायणमन्दिरं (तालकाड्), श्रीनम्बिनारायणमन्दिरं (तोण्डनूर्), श्रीकेशवनारायणमन्दिरं (बेलूर्), श्रीसौम्यनारायणमन्दिरं (नागमङ्गला), श्रीवीरनारायणमन्दिरं (गडग्) च । श्रीरामानुजमुनेः अनुज्ञया कुशलनिर्वाहकः शिष्यः दाशरथिः एतेषां निर्माणदायित्वं स्व्यकरोत् ।

कर्णाटकप्रदेशे विंशत्यधिकवर्षकालं कृतप्रवासस्य यतिराजस्य द्वादश वर्षाणि यादवाद्रौ व्यतीतानि इति ऊह्यते ।

*********

---

[1] मण्ड्या जनपदे मेलुकोटे नगरे स्थितं श्रीचेलुवनारायणस्वामिक्षेत्रं दक्षिणबदरी इत्यपि विख्यातम् । सत्ययुगे श्रीदत्तात्रेयेण, त्रेतायुगे श्रीरामेण, द्वापरयुगे श्रीबलरामकृष्णाभ्यां, कलियुगे श्रीरामानुजाचार्येण च आराधितः क्रमशः वेदाद्रिः नारायाणाद्रिः यादवाद्रिः यतिशैलः इति नामभिः स्मर्यते इदं क्षेत्रम् । अत्र विद्यमानं योगनरसिंहमन्दिरम् अतिप्रसिद्धम् ।

[2] अत्र १९७७तमे वर्षे संस्कृत-संशोधन-संसत् संस्थापिता ।

## ९. श्रीरङ्गे अन्तिमकालः

श्रीरङ्गं प्रत्यागते यतिराजे प्रमुदितहृदयाः सञ्जाताः भक्ताः । तदीयं दर्शनं प्राप्य तदीयां मधुरवाणीं च श्रुत्वा आत्मनः पूतान्तःकरणान् अमन्यन्त ते । ततः सः महामुनिः शिष्यान् प्रबोधयन् श्रीरङ्गे एव स्वावतारस्य अन्तकालपर्यन्तं न्यवसत् । १२० वर्षात्मकं दिव्यम् आयुःकालं भूलोके व्यतीत्य लोकोद्धारकः महात्मा सः वैकुण्ठधाम जगाम ।

आदिशेषस्य अवताररूपस्य श्रीरामानुजाचार्यस्य त्रयः दिव्यविग्रहाः मेलुकोटे-यादवाद्रिपतिमन्दिरे, श्रीपेरुम्बुदूर्-आदिकेशवमन्दिरे, श्रीरङ्गमन्दिरे च आराध्यन्ते । भक्तानां याञ्चया त्रयः अपि एते विग्रहाः तस्य जीवितकाले एव समुपकल्पिताः अभवन् । यतिराजः स्वीयदिव्यशक्तिं तेषु सङ्क्राम्य भक्तान् समाश्वासयत् - 'अहं च एषः विग्रहः च अभिन्नौ । यदा यदा मम दिदृक्षा भवति तदा अस्य दर्शनेन मनःशान्तिः अवाप्यताम्' इति । प्राणत्यागात् प्राग् दयासिन्धुना यतिराजेन भक्तशिष्येभ्यः अमृतोपमाः उपदेशाः प्रदत्ताः। तेषु केचन -

- पूर्वाचार्याणाम् उपदेशे अचला श्रद्धा भवतु ।
- इन्द्रियाणां दासत्वं मास्तु कदाचन ।
- आचार्यस्मरणं भगवद्ध्यानं स्वाध्यायं च नित्यं कुरुत । इतिहास-पुराण-दिव्यप्रबन्ध-श्रीभाष्यादेः
  अध्ययनं प्रतिदिनं (अवरतः घण्टां यावत्) कुरुत ।
- दुष्टानां संसर्गः सर्वथा मास्तु । भोगासक्तान् प्रति उदासीनता भवतु । भक्तानां सत्सङ्गः सर्वदा भवतु ।
- प्रपन्नः कदापि स्वस्य भविष्यतः विषये चिन्तनम् उद्वेगं वा न धारयेत् । प्रपत्तिधर्मविरुद्धा ननु तादृशी उद्विग्नता ! वर्तमानं जीवनं पूर्वकर्मानुरूपं भवति । अतः तद्विषये शोकः न कार्यः ।
- नरः ज्ञानवान् चेदपि ईश्वरस्य भागवतानां च सेवया एव श्रेयः विन्दति ।
- स्वधर्मपालनं स्वार्थसिद्धये न, अपि तु भगवत्प्रीत्यर्थम् इति जानीत ।

**नमो रामानुजार्याय करुणापाररूपिणे ।**
**दीनोद्धरणशीलाय श्रीपतेराद्यसेविने ॥**

*********

# १०. परिशिष्टम्

## विशिष्टाद्वैतदर्शनम्

अस्य दर्शनस्य केषाञ्चन विचाराणाम् अत्र संक्षेपपरिचयः दीयते।

**अद्वैतम् -** तत्त्वम् एकमेव। तत् ब्रह्म। ब्रह्म निर्विशेषम्। न विद्यते द्वितीयम् इति अद्वैतम्।

**किं नाम विशिष्टाद्वैतम्**

तत्त्वत्रयम् अस्ति। - चित् अचित् ईश्वरः।
चित् अचित् च ईश्वरस्य शरीरे। ईश्वरः शरीरी।
चिदचिच्छरीरवत् ब्रह्म। तत् च सविशेषम्।
लोके तत्तुल्यं द्वितीयं वस्तु न किञ्चित् विद्यते अतः तत् परं तत्त्वं विशिष्टम्।
न विद्यते विशिष्टस्य द्वितीयं इति **विशिष्टाद्वैतम्**।

**तत्त्व-हित-पुरुषार्थाः** त्रयः एते विशिष्टाद्वैत-दर्शनस्य सारभूताः।

**(1) तत्त्वम्**

*तत्त्वत्रयं*[1] ज्ञेयम्।

- चित् (जीवात्मा) - ईश्वरभिन्नः जीवः, शेषः, चेतनः, अणुस्वरूपः, समग्रशरीरव्यापी, सुखाद्यनुभोक्ता च।
- अचित् (द्रव्यम्) - तत् त्रिविधम् - प्रकृतिः, कालः, शुद्धसत्त्वं च इति।
- ईश्वरः (परमात्मा) - परं ब्रह्म, अखिलचिदचिच्छरीरकः, जगत्कारणं, जगन्नियामकः, सर्वेश्वरः, सर्वशेषी, सर्वान्तर्यामी, सर्वशब्दवाच्यः, अखिलहेयप्रत्यनीकः, कल्याणगुणैकतानः, सर्वकर्मसमाराध्यः, सर्वफलप्रदः, स्वतन्त्रः, **श्रीपतिः**।

**श्रीसम्प्रदायः**

मुमुक्षुभिः श्रियः प्रपदनपूर्वकं विष्णुः परमपुरुषार्थः प्रार्थ्यते इत्यतः अयं श्रीसम्प्रदायः।

**श्रीः -** लक्ष्मीः भगवदनुरूपा, नित्यं विष्णोः अनपायिनी (अवतारेषु अपि), सकलजगत्स्वामिनी, सर्वव्यापिनी।

**शृणाति निखिलान्दोषान् श्रीणाति च गुणैर्जगत्।**
**श्रीयते चाखिलैर्नित्यं श्रूयते च परम्पदम्॥ अहिर्बुध्न्यसंहिता - ५१-६४**

निखिलान् दोषान् शृणाति - नाशयति।
गुणैः जगत् श्रीणाति - तन्नाम जीवानां प्राप्यवस्तुनि रुचिम् उत्पादयति।

---

[1] शैवमतेऽपि पशुः पाशः पतिः इति तत्त्वत्रयम् उच्यते।

अखिलैः इयं श्रियते - भक्तैः इयम् आश्रियते। आश्रियते विष्णुः अनया च।
श्रूयते च परम्पदम् - भक्तस्य प्रार्थनां शृणोति। भक्तान् भगवन्तं श्रावयति च।
एवं षड्भिः लक्षणैः 'श्रीः' प्रकीर्त्यते।

**(2) हितम्**

हितं नाम मोक्षोपायः। भक्तिः / शरणागतिः परमात्मप्राप्तेः उपायः।

**भक्तिः -**

**स्वधर्मज्ञानवैराग्यसाध्यभक्त्येकगोचरः।**
**नारायणः परं ब्रह्म गीताशास्त्रे समीरितः ॥१॥** **श्रीयामुनाचार्यः - गीतार्थसङ्ग्रहः - १**

परमात्मा भक्त्या केवलया साध्यः। भक्तिः ज्ञानवैराग्याभ्यां साध्या। अयं विषयः श्रीरामानुजाचार्येण स्वग्रन्थेषु इत्थं व्याख्यायते -

- भक्तिरूपापन्नज्ञानं मोक्षसाधनम्।
- **वैराग्यम्** - परमात्मव्यतिरिक्तेषु सर्वेषु विरक्तिः।
- तैलधारावद् अविच्छिन्नस्मृतिसन्तानरूपा **भक्तिः**।

**शरणागतिः** - प्राप्यः प्राप्त्युपायः च उभावपि परमात्मा एव। अतः अयं सिद्धोपायः प्रोक्तः।

**निजकर्मादि भक्त्यन्तं कुर्यात्प्रीत्यैवकारितः।**
**उपायतां परित्यज्य न्यस्येद्देवे तु तामभीः॥३१॥** **श्रीयामुनाचार्यः -गीतार्थसङ्ग्रहः -३१**

स्वामिवेदान्तदेशिकः 'न्यासदशक'स्तोत्रे शरणागतितत्त्वं सुव्यक्तं प्रतिपादयति। अत्र आदौ सात्त्विकत्यागविषये उक्तम्। तन्नाम कर्तृत्व-ममत्व-कर्मफलत्यागः। प्राप्यः प्रापकः च परमात्मा एव इति सिद्धोपायत्वम् अपि प्रोक्तम् -

**अहं मद्रक्षणभरो मद्रक्षणफलं तथा।**
**न मम श्रीपतेरेवेत्यात्मानं निक्षिपेत् बुधः॥**
**श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः।**
**एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम्॥** **न्यासदशकम् -१, ४**

प्रपत्तिः / आत्मनिक्षेपः/ भरन्यासः / भरसमर्पणम् इति 'शरणागति'वाचकानि इतरपदानि। अस्य पञ्च अङ्गानि -

१. आनुकूल्यस्य सङ्कल्पः
२. प्रातिकूल्यस्य वर्जनम्
३. महाविश्वासः
४. गोप्तृत्ववरणम्
५. कार्पण्यम् - अकिञ्चन्यम्, अनन्यगतित्वञ्च

आनुकूल्यस्य सङ्कल्पः नाम यज्ञदानतपःकर्मणाम् आचरणं, मोक्षसाधनत्वेन च, अपि तु भगवत्प्रीत्यर्थम्।
प्रातिकूल्यस्य वर्जनं नाम निषिद्धकर्मणां काम्यानां कर्मणां च त्यागः।

श्रीमद्भगवद्गीतायाः अष्टादशे अध्याये त्यागः विशदतया प्रोक्तः। तदनुसारं प्रपत्तिधर्मानुसारं च एतेषां त्यागः श्रेयसे -

- मोक्षप्राप्तये उपायान्तरत्यागः
- तत्प्राप्ति-विरोधि-कर्मणां त्यागः
- काम्यानां कर्मणां त्यागः
- सर्वकर्मफलत्यागः

कर्तव्यानां कर्मणां विषये श्रीरामानुजाचार्यस्य गीताभाष्ये इदमुक्तम् -
**'यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत्।'** (श्रीमद्भगवद्गीता - १८/६)

**'यज्ञदानतपःप्रभृतीनि कर्माणि पावनानि तस्मात् उपासनवत् (कर्तव्यानि), कर्मणि ममतां फलानि च त्यक्त्वा अहरहः आप्रयाणाद्.....मुमुक्षुणा कर्तव्यानि'** - श्रीरामानुजकृत-गीताभाष्यम्

**(3) पुरुषार्थः**

परमात्मकैङ्कर्यप्राप्तिः एव परमं प्रयोजनम्।

मुक्तः परब्रह्मसाम्यम् आप्नोति। अपहतपाप्मेत्यादिषु अष्टसु अंशेषु ब्रह्मसाम्यम् आप्नोति। ब्रह्मभावम् आप्नोति इत्यर्थः।

**'यः आत्मा अपहतपाप्मा, विजरः, विमृत्युः, विशोकः, विजिघत्सः, अपिपासः, सत्यकामः, सत्यसङ्कल्पः, सः अन्वेष्टव्यः, सः विजिज्ञासितव्यः। यः तम् आत्मानम् अनुविद्य विजानाति सः सर्वान् च लोकान् सर्वान् च कामान् आप्नोति इति प्रजापतिः उवाच।'**

छान्दोग्योपनिषत् - ८.७.१

*********

कावेरी विरजा सेयं वैकुण्ठं रङ्गमन्दिरम् । स वासुदेवो रङ्गेशः प्रत्यक्षं परमं पदम् ।
विमानं प्रणवाकारं वेदशृङ्गं महाद्भुतम् । श्रीरङ्गशायी भगवान् प्रणवार्थप्रकाशकः ॥

श्रीरङ्गमन्दिर-राजगोपुरम्

